



## इतिहास - पुराण

# निर्वचन कोष



डॉ॰ शिवसागर त्रिपाठी

इतिहासपुराण

# निर्वचनकोषः



**डा. शिवसागरत्रिपाठी**
सह-आचार्यः (रीडर) संस्कृत-विभागे
राजस्थानविश्वविद्यालयः, जयपुरम्

देवनागर प्रकाशनम्, जयपुरम्

राजस्थान सस्कृत अकादमी
के आर्थिक-सहयोग से प्रकाशित




प्रथम-सस्करण : १९८८ मूल्य : ८०-००
प्रकाशक : देवनागर प्रकाशन, जयपुर
मुद्रक : एलोरा प्रिन्टर्स, पं. शिवदीनजी का रास्ता, जयपुर



इतिहासः कुशाभासः शूकरास्यो महेश्वरः ।
अक्षसूत्रं घटं बिभ्रत्पङ्कजाभरणान्वितः ।।

इतिहासपुरुषः



पुराणं चम्पकाभासं शुकवक्त्रञ्च तुन्दिलम् ।
अक्षसूत्रमयं ज्ञेयं नानाऽऽभरणभूषितम् ।।

पुराणपुरुषः

## समर्पणम्

ऐतिह्यपुरुषः सोऽयं तथा पुराणपूरुषः ।
वत्तस्य संस्कृतेश्चैव रक्षिणौ देवरूपिणौ ।।
प्रेरणाबीजवप्तारौ वाल्मीकिव्यासयोः हृदि ।
निर्वचनमयः कोषः ताभ्यामेव समर्प्यते ।।

—डॉ. शिवसागरत्रिपाठी

# अस्मदीयम्

भारतीयसंस्कृतेरितिहासस्य च स्रोतरितिहासपुराणमित्यत्र न क्वापि संशीतिः। अथर्ववेदसंहितायां वेदैः सह पुराणोत्पत्तिः स्वीकृता–'ऋचः सामानि छन्दांसि पुराणं यजुषा सह'। स्कन्दपुराणस्य ऋषिः 'आत्मा पुराणं वेदाना'मिति इतिहासपुराणस्य वेदोपबृंहणत्वं स्वीकरोति। अतो वेदविद्यां सम्यगवगन्तुमितिहासपुराणस्याध्ययनमत्यावश्यकम्। यतोऽत्र संस्कृतीतिहास–भूगोल–धर्म-दर्शन-नीति-साहित्य-ज्यौतिषायुर्वेद-व्याकरण-देवशास्त्र-और्ध्वदेहिकी-तीर्थमाहात्म्यादि-विविधविषयाः आख्यानोपाख्यानैः सह सहजभावेनानुस्यूताः। अतो यत्खलु वेदव्यासेन महाभारतसन्दर्भे लिखितम्—'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्'-तत्खलु पुराणेतिहासविषयेऽपि सर्वथा समीचीनम्। इतिहासपुराणग्रन्थाः भाषिक-संरचनादृष्ट्यापि महत्त्वपूर्णाः। वैदिकसम्पत्तिशेवधौ यथाऽर्थस्य महत्त्वं, तथैव तदुपकारकेष्वितिहासपुराणेषु अर्थस्य महिमा सर्वातिशायी। वैदिककालादेव परम्परयागतेषु आर्थनिर्वचनेषु प्रमुखं साम्राज्यमर्थस्य। हितोपदेशे निजशैल्या सत्यमेव लिखितम्-'अर्थेन बलवान् सर्वो ह्यर्थाद् भवति पण्डितः'। यथा लोकेऽर्थं विना किमपि कार्यं न सञ्चरति, तत्कृतेऽर्थकोषस्यावश्यकता भवति, तथैव सारस्वतलोकेऽपि अर्थेनैव समृद्धिरायाति। तत्सञ्चयार्थमपि कोषनिर्माणं क्रियते। एतद्दृष्ट्या विविधकोषाः विनिर्मिताः, परम् आर्थ-निर्वचनकोषोऽद्यावधि इतः पूर्वं न प्रकाशितः। रामायण-महाभारतगत—निर्वचन-शब्दानां परिशिष्ट-रूपेण सञ्चयनमवश्यं मया 'रामायण एवं महाभारत का शाब्दिक विवेचन' नामके स्वग्रन्थे कृतम्।

प्रबन्धस्यास्य द्योतनिकायामितिहासपुराणस्य महत्त्वं, तस्य वेदोपबृंहणत्वं, इतिहासपुराणस्य विवेचनं, प्रक्षिप्तांश-पाठभेदस्थितिः, शब्दार्थसम्बन्धः, निरुक्तं व्याकरणञ्च, अपाणिनीयप्रयोगाः, निर्वचनपरम्परा, कोषः कोषसाहित्यञ्च, निर्वचन-परिभाषा वृत्तयश्च, निर्वचनाध्ययनपरम्परेतिहासः, शैली, नामकरणम् इति प्रभृतयः संक्षेपतो व्याख्याताः।

एतदनन्तरं ग्रन्थस्यास्य तृतीयपृष्ठे सङ्केतितेष्वितिहासपुराणग्रन्थेषु यथोपलब्धनिर्वचनानामकारादिकक्रमेण कोषरूपेण सङ्कलनं वर्तते। प्रबन्धस्यामुष्य पादटिप्पण्यां प्रयुक्ताः सामान्यास्तथा मूलग्रन्थानां सहायकग्रन्थानाञ्च सङ्क्षेपाः परिशिष्टेऽकारादिकक्रमेण विशदीकृताः।

ग्रन्थस्यास्य प्रणयने परोक्षतोऽपरोक्षतो वा येभ्यः साहाय्यं गृहीतं, तेषां सन्दर्भाः पादटिप्पण्यां यथाशक्ति प्रदत्ताः। यदि कथमपि निर्देशो न कृतः, तर्हि नाकृतज्ञतावशाद् अपितु प्रमादवशादेव। अन्ततः समेषां विदुषां सुहृदाञ्च कृते हृदाभारो व्यज्यते, यैः समये समये स्वबहुमूल्यसम्मतिदानेनोपकृतः, विशेषतस्तु राजस्थानसंस्कृत-अकादम्याः अध्यक्षवर्याणां राष्ट्रपतिपुरस्कारेण अन्ताराष्ट्रिय-विश्वभारतीपुरस्कारेण च सम्मानितानां विद्वन्मूर्धन्यानां संस्कृतजगति मण्डनी-भूतानां डॉ मण्डनमिश्रमहाभागानां कृते, यैः प्रकाशनानुदानं स्वीकृत्य सतत-लेखनाय प्रोत्साहितोऽयं सर्जनात्मा। एवमेव अकादम्याः उपाध्यक्षं राजस्थान-विश्वविद्यालये आचार्यपदमलङ्कुर्वाणं राष्ट्रपतिपुरस्कारेणालङ्कृतं सहयोगिप्रवरं डा. रामचन्द्रद्विवेदिमहोदयं प्रति स्वकृतज्ञतां ज्ञापयामि, येन पुस्तकस्य प्रस्तावनां विलिख्यात्यधिकमनुगृहीतोऽहम्। अत्र श्रद्धाभाजः डा. फतहसिंहमहोदयाः कथमपि विस्मर्तुं न शक्याः, यैः खलु अध्ययनानुसन्धानक्षेत्रे प्रवृत्तो निर्वचनकोष-निर्माणाय च प्रेरितोऽयं जनः। पौनःपुन्येन सर्वे धन्यवादैः सभाज्यन्ते।

मन्ये खलु कोषोऽयमध्येतॄणां शोधकर्तॄणाञ्च कृते सर्वथोपादेयो भविष्यतीति प्रस्तुवतो मे महान् हर्षो जाजायते चेतसि।

वागीशं सच्चिदानन्दं
हृदि ध्यात्वा परं विभुम्।
इतिहासपुराणीयः
कोषो ज्ञानद उच्यते॥

—डा. शिवसागरत्रिपाठी

# प्रस्तावना

'रामायण एवं महाभारत का शाब्दिक विवेचन' इत्याख्यो हिन्दीभाषा-निबद्धो ग्रन्थो डा. शिवसागरत्रिपाठिमहोदयेन 1986 तमे ख्रिस्तीयाब्दे प्राकाश्यमुपनीतः । तमेव विषयमवलम्ब्य प्रकृतग्रन्थे ह्यग्नि-विष्णु-वायु-लिङ्ग--मार्कण्डेय--कूर्म--मत्स्य--भागवत--ब्रह्मवैवर्तपुराणान्यप्यनुसंधाय 'इतिहास-पुराणकोपः' संस्कृतगिरा सौरसारस्वतसाधकानां समक्षं साम्प्रत समुपाहृतः । डा. त्रिपाठी सुकुमारवस्तुनि साहित्ये सुप्रथितयशाः बहून्ग्रन्थान्निर्माय शोधार्थं निरुक्तसंप्रदायं प्रास्तौषीत् । तस्यैव सुफलं ग्रन्थरत्नमिदम् । अवशिष्टानां पुराणानां निरुक्तान्यपि नचिरादेव स प्रस्तोष्यतीत्यत्र न मे मनसि सन्देहलेशः पदं दधाति ।

वस्तुतो निरुक्तानां तात्पर्यं शब्दानां यथाकथञ्चिद् अर्थवत्त्वं प्रतिपादयितुं प्रतिभाति । 'अनर्थका हि मन्त्राः' इति कौत्सः प्रतिपेदे । तेषाञ्चानुपपन्नार्थत्वं विप्रतिषिद्धार्थत्वमविस्पष्टार्थत्वं चोदाजहार । यास्कस्तु तेषां निरुक्त प्रतिपाद्यार्थ-वत्त्वं प्रत्यपादयत । आह च—'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । पुरुषा-पराधः स भवति । यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवयवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति' (I.16) । एवमेव सायणाचार्योऽपि ऋग्वेदभाष्यभूमिकायां 'तदेवमेतैस्तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वं नास्ती'ति पूर्वपक्षमुपक्षिप्य 'अर्थाभिधायकत्वे तु दृष्टं लभ्यत' इति यास्कसिद्धान्त-मेव दृढयन्नभाषत—'विद्यमान एवार्थः प्रमादालस्यादिभिर्न ज्ञायते । तेषां निगम-निरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः ।' जैमिनिमीमांसासूत्रस्य प्रथमा-ध्याये सूत्रैस्तद्भाष्यकारः कुमारिलभट्टश्च तद्व्याख्यया, पाणिनिसूत्रभाष्यकारः पतञ्जलिश्च यास्कनिर्दिष्टदिक्प्रपञ्चेन वेदानां प्रामाण्यमर्थवत्त्वं च निरदीधरन् ।

लौकिकानां, वैदिकानामिव, शब्दानामर्थावगमाय व्याकरणं व्युत्पत्तिनिमि-त्तकं निरुक्तञ्च प्रयोगनिमित्तकमाधार शरणीकुर्वाते । एकस्यैव शब्दस्य निरुक्तानि बहूनि दृश्यन्ते । तत्र किं कारणम् ? अर्थपरम्पराया लोपः अविस्पष्टता वा इत्येके । वस्तुतः परम्परालोपेन सह सम्प्रदायकृताः पुरुषोत्प्रेक्षानिमित्ताः ह्यभिप्रेतार्थसम्पो-षिकाः प्रवृत्तयोऽपि दरीदृश्यन्ते । वेदोत्तरकाले प्राकृतशब्दानां पूर्वं संस्कृतीकरणं तदनु तन्निरुक्त-निर्माणमपि व्याकरणपाटवसाहाय्येन परिभाष्यत इति निरुक्तानि स्वमनीषया सूक्ष्मेक्षिकया निरीक्ष्यैव ग्राह्याणि, नान्यथा । निरुक्तानि च प्रायेण

तत्तच्छब्दविशेषनिष्ठसंस्कृतिस्वरूपं परामृश्य निर्मीयन्त इत्यपि वेदव्याख्यानप्रवृत्तेन यास्ककृतनिरुक्तेन स्पष्टीभवति । तत्र च निरुक्तवैविध्यं परम्परास्वरूपवैचित्र्यमामृशत्यथवा परम्पराया अनिर्णीतत्वाद्विकल्पा अपि यथाव्युत्पत्ति प्रस्तूयन्ते ।

इतिहास-पुराण–निर्वचनकोषानुसन्धानेन वेदब्राह्मणादिकालात् प्रवर्तमाना निरुक्तपरम्परा कथमिव समादृता, इतिहास-पुराणेषु च निरुक्तीनां कीदृशं वैशिष्ट्यं वैचित्र्यं वा चकास्तीति डा.त्रिपाठिमहोदयो 'निर्वचनरीति' रिति प्रकरणे विशत्तथ्यनिदर्शनैः सयुक्तिकं विविनक्ति । तदनु सः विभिन्नपात्राणां नामकरणस्याधाराणां मनाग् दिग्दर्शनं प्रस्तौति । वस्तुतोऽतीव गभीरोऽयं विषयः । पुराणेषु विशेषतो नाम्नां व्युत्पत्ति -प्रदर्शनं बहुधा दृष्टिपथमवतरति । एतत्सर्वं प्रत्येकं निरुक्तीनां विशेषपरिशीलनेन स्फुटीभविष्यति । स्वयं डा. त्रिपाठिमहाभागः स्वकीये हिन्दीग्रन्थे विषयमिमं किञ्चिद्विस्तरेण प्रास्तौषीत् । अत एवात्र विस्तरः परिहृतः ।

इतिहास-पुराणेषु बहूनां शब्दानां विविधानि निरुक्तानि निरीक्ष्यन्ते । तत्र च बहूनि निरुक्तानि शब्दभेदेन निर्दिष्टान्यप्येकात्मकानि । सर्वेषां पुराणानां शब्दविशेषस्य कस्मिन्निरुक्त ऐकमत्यमिति सर्वशब्दसंकलनयैव समाधातुं शक्यते । अचिरेणैव डा.त्रिपाठी पुराणानामन्येषां निरुक्तान्यपि वेदवेदांगविदां विदुषां विनोदाय संकलयिष्यतीत्याशासे । तेनैव निरुक्तानां पुराणदृष्ट्या संपूर्ण संकलनं तदनुसृत्य चामूलचूलं विवेचनं सेत्स्यतीति सोत्कण्ठं वयं साकल्येन पुराणगतनिरुक्तविवेचनं प्रतीक्षामहे ।

अस्मिन् 'इतिहासपुराण-निर्वचनकोषे' येषां शब्दानां निरुक्तयः स्ववैविध्येन पुराणगतसस्कृतिसंकेतेन, वेदोपनिषत्परम्पराप्रसूतेन निर्वचनकौशलेन च विविधविद्यावदातस्वान्तानां विपश्चिदपश्चिमानां मनांस्यावर्जयिष्यति, तासु केचन शब्दा अधस्तादुल्लिख्यन्ते । शब्दानन्तरं यत्र क्वचन कृताः संख्याः निरुक्तिवैविध्यं सूत्रयन्ति । अक्षरः, अग्निः, अनन्तः, अनिरुद्धः, अम्भः, असुरः, आचार्यः, आदित्यः-14, ईश्वरः-9, उमा-5, ऋषिः, ओॐम्-11, ककुत्स्थः-5, कश्यपः-4, कार्तिकेयः, कालः-6, कृष्णः-13, क्षत्रियः-9, क्षरः-6, क्षेत्रज्ञः-6, जरासंधः-7, त्रिपथगा-6, त्रिपुरम्, त्रिपुरारिः, त्रेता-5, दक्षः-7, दामोदरः-6, दुर्गा-8, धर्मः-9, धारणा-9, धुन्धुमारः-10, नारायणः-22, नासत्यः-7, निषादः-7, पशुपतिः-5, पाञ्चजन्यः-9 प्राणायामः-8, पुत्रः-19, पुरुषः-17, ब्रह्म-ब्रह्मा-10, ब्राह्मणः-6, भारतम्-12, महादेवः-12, मार्तण्डः (कश्यपः) -9, यमः, (ईश्वरः)-11, वाराणसी-6, वासुदेवः-15, विष्णुः-13, वेदव्यासः-12, व्यूहः-6, शिवः-9, सत्यः (गोविन्दः)-7 सविता-5, सात्त्वतः-7, हरिः-9, हृषीकेशः-6,

ऐतेषु बहूनां शब्दानां निरुक्तानि शब्दान्तरैर्विभिन्नेषु पुराणेषु समुपात्तानि। कानिचिच्च वस्तुतो विभिन्दन्ति, तत्र भेदे किं विनिगमकमिति शोधार्थिभिर्ध्येयम्। पुनश्च येषां निरुक्त-संख्या भूयसी वर्तते, तत्र किं कारणम्? तेषां महत्त्वमधिकमिति विविध निरुक्तानि प्राचलन् प्रावर्तन्त वा, अन्यो वा कश्चन हेतुरित्यपि प्रतिशब्दमध्येयम्।

वस्तुतः डा. त्रिपाठिमहोदय-ग्रथितः 'इतिहास पुराण-निर्वचन-कोषः' शोधार्थिनां महत्साहाय्यमाचरिष्यति। प्रक्षिप्तांशसन्निबद्धनिरुक्तानि पृथक्कृत्वा निरुक्तैतिह्यमपि निभालयितुं शक्यते। नवशोधनिर्माणदिशं दर्शयितुं कृतभूरि-परिश्रमः सन्तन्तं सारस्वतसाधनासमाहितव्रतो ग्रन्थनिर्माणनैपुणीप्रथितयशाः डा.त्रिपाठिमहोदय एवमेव स्वयशसा दिगन्तवधूमण्डनमारचयत्विति सप्रश्रयं पराम्बासहित परात्परं परमेश्वरं प्रार्थये।

डॉ. रामचन्द्रद्विवेदी
आचार्यः, संस्कृत-विभागे
निदेशकः, जैन-अनुशीलन-केन्द्रं मानविकीपीठञ्च
राजस्थान-विश्वविद्यालये,
उपाध्यक्ष राजस्थान, संस्कृत-अकादमी
जयपुरम्

# द्योतनिका

विश्वस्मिन्नपि विश्वे सर्वविदितं तथ्यमेतद्यद् यथा वैदिक-धर्म-संस्कृतिज्ञानाय सर्वजनहिताय ब्रह्मनिःश्वसितभूतस्य वेदराशेरपेक्षा वर्तते, तथैव भारतस्यातीतज्ञान-विज्ञानहेतवे इतिहासपुराणग्रन्थानामनुशीलनं परमावश्यकम्। एतत्साहित्यं तु वेदोक्ततत्त्वसम्पन्नत्वाद् भारतस्यामूल्यो निधिः वर्तते। ये तु केचिदिमं पुण्यराशिं गल्पं कपोलकल्पितमिति मत्वा निन्दन्ति पारिहरन्ति च, ते मन्ये वराकाः दयापात्रमेव। वस्तुतस्तु 'इतिहासपुराणः पञ्चमो वेदानां वेदः।'[1]

वेदसम्पत्तेः सम्यगवबोधनार्थं ब्राह्मणारण्यकोपनिषद्वेदाङ्गादीनामिव इतिहास-पुराणस्यापि परिशीलनमपेक्ष्यते। यतोऽत्र वैदिकज्ञानस्यैव समुपबृंहणं वर्तते 'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेदिति'[2]। रामायणे, महाभारते पुराणेष्वपि च शब्दशः स्वीकृतमिदम्—

'वेदोपबृंहणार्थाय तावग्राहयत प्रभुः'[3]
'ब्रह्मन् वेदरहस्यञ्च यच्चान्यत्स्थापितं मया।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया॥[4]
'पुराणं पञ्चमो वेद इति ब्रह्मानुशासनम्।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः'॥
आत्मा पुराणं वेदानां पृथगङ्गानि तानि षट्।
यन्न दृष्टं वेदेषु तद् दृष्टं स्मृतिभिः किल॥
उभाभ्यां यन्न दृष्टं हि तत्पुराणेषु गीयते।
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्॥'[5]
'श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्'[6]
'सर्ववेदार्थसाराणि पुराणानि'।[7]
'प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम्।[8]

---

1. छा. उप. 7/1/4
2. महा. चि. 1/1/267
3. वा. रा. बाल 4/6
4. महा. 1/1/62
5. स्कन्द. रेवा 1/18,22,23
6. स्कन्द. काशी 2/96
7. नारदीय. पु. 1/9/97
8. वा. पु. पू. 51/54

अलङ्कारशास्त्रिभिरुपदेशात्मको ग्रन्थः त्रिषु भागेषु विभक्तः प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च ।[1] तत्र वेदेषु स्मृतिषु च प्रभुसम्मितता दृश्यते, परमितिहासपुराणे सुहृत्सम्मितत्वं कदाचिच्च कान्तासम्मितत्वमपि परिलक्ष्यते । एवममुत्र लोकगौरवं सुरक्षितं, यत्खलु तत्रत्येषु आख्यानोपाख्यान-नीति-गाथा-कल्प-निर्वचनादिषु सर्वत्रावलोक्यते इति वैशिष्ट्यं वरीवर्ति । यथोल्लिखितं स्कन्दपुराणे—

'इतिहासपुराणानि भिद्यन्ते लोकगौरवात्'[2]

## इतिहासपुराणम्

इतिहासपुराणशब्दौ सहैव पृथग्वा एकवचने द्विवचने बहुवचने च प्रयुज्येते । उभावपि एवं व्याख्यातौ—'पुरा भवं पुराणम्'[3] 'पुराणं नवं भवति'[4] तथा 'इतिहासः पुरावृत्तम्'[5] 'इति ह आस इतिहासः'[6] (अत्र इतिह इति पारम्पर्योपदेशेऽव्ययम् अथवा ह इति निश्चयार्थकमव्ययं ज्ञेयम्) । नीलकण्ठाचार्येण 'पुराणं पुरावृत्तम्' इति लक्षणं प्रदत्तम् । एवं द्वयोरपि शब्दयोः घटनाप्रामुख्यं द्योतते । अतः कदाचिदेतौ शब्दावन्योन्यस्य कृतेऽपि उपलभ्येते'—'अत्राप्युदाहरतीममितिहासं पुरातनम्'[8] 'द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा'[9] । चतुर्दशविद्यास्वपि[10] पुराणमेव परिगणितं, परं तत्र इतिहासोऽपि विद्यात्वेनोपलक्षितः निश्चीयते ।

इतिहासपुराणशब्देन समन्वितरूपेण रामायण-महाभारत-पुराण-उपपुराण-औपपुराणादीनि गृह्यन्ते । परमत्र परिगणनायां मतवैभिन्न्यं वर्तते । तथापि—

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापल्लिङ्गकूस्कानि पुराणानि प्रचक्षते ॥[11]

इति देवीभागवतवचनानुसारं मार्कण्डेय - मत्स्य - भागवत-भविष्य-ब्रह्म-ब्रह्मवैवर्त-ब्रह्माण्ड-विष्णु-वाराह-वामन-वायु-अग्नि-नारदीय-पद्म-लिङ्ग-गरुड-कूर्म-स्कन्द-पुराणान्यष्टादश विद्यन्ते । एतेषां श्लोकसंख्या उपपुराणानां संख्यां परित्यज्यापि सपादपञ्चलक्षात्मिका विद्यते । तथाहि महाभारतस्य लक्षं, रामायणस्य पञ्चविंशतिसहस्रं, अष्टादशपुराणानाञ्च चतुर्लक्षम् । यथोक्तं मत्स्यपुराणे—

---

1. काव्यप्रकाशः-प्रथमोल्लासः
2. स्कन्द—कुमारिका 40/198
3. अ. सु. 1/6/5
4. नि. 3/20/24
5. अमर. 1/6/4
6. तत्रैव सुधा व्याख्या
7. महा. 1/5/1 टीका
8. म. पु. 17/6
9. महा. 1/1/17
10. पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः । वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश—या. स्मृ. 1/3
11. दे. भा. 1/2/3

एवं सपादाः पञ्चैते लक्षा मर्त्ये प्रकीर्तिताः ।
पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः ।।[1]

एवं परिमाणदृष्ट्या विशालं वाङ्मयमुद्वहतीतिहासपुराणमिति ।

प्रकृतग्रन्थे तु निर्वचनदृष्टया रामायण-हरिवंशसहितमहाभारत-अग्नि-विष्णु–वायु--लिङ्ग--मार्कण्डेय–कूर्म-मत्स्य–भागवत - ब्रह्मवैवर्तपुराणान्यध्ययनसरण्या–मानीतानि । अथ च ब्रह्म-ब्रह्माण्ड-पद्म-स्कन्द-गरुड-शिव वामन-देवी-कालिका-नरसिंह-नीलमतादिपुराणोपपुराणादिभ्यः निर्वचनसम्बन्धिनी प्रकीर्ण-सामग्री समाविष्टा । तथा आवश्यकतानुसारं शब्दकल्पद्रुमे प्रदत्तानां पुराणोपपुराणोद्धरणानामुपयोगोऽप्यंशतः कृतः । तत्रत्यास्पष्टविवरणत्वात्कतीनांचित्सन्दर्भाणामुपलब्धिः तत्तद्ग्रन्थेषु न सुलभा जाता ।

यद्यपि इतिहासपुराणग्रन्थाः वेदार्थ-भाष्य-रहस्यादिप्रतिपादकत्वेन सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरित-लक्षणाश्रयत्वेन नीति-धर्माचार-संस्कारादीनां प्रौढशिक्षा दातृत्वेन विश्वकोषरूपेण महीयन्ते, परमेते भाषिकसंरचनापथापि महत्त्वपूर्णाः । महर्षि-प्रणीता एते सरल-सुबोध-भाषायां निबद्धा इत्यत्र न संशयः। तथाप्यत्रापाणिनीय-प्रयोगाः निर्वचनानि च बहुश उपलभ्यन्ते । वस्तुतः बाल्मीकि-व्यासादयो महर्षयः व्याकरणस्य जटिलप्रयोगाणां पक्षपातिनो न, ते तु लोक-व्यवहारभाषामवलम्ब्य सामान्यजनेष्वपि कथ्यसम्प्रेषणेऽनुरक्ताः । एतादृशैः प्रयोगैः, उपलब्धैः निर्वचनैः व्याख्यादिभिश्च पुष्टिर्भवत्यस्य कथनस्य । यत्र कुत्रापि असंस्कृताः शब्दाः दृश्यन्ते, मन्ये ते कथकैः भ्रमवशादेव योजिताः ।

## प्रक्षिप्तांशः पाठभेदश्च

इतिहासपुराणग्रन्थानां पाठानुसन्धानेन सम्यक् परिशीलनेन च स्पष्टं प्रतीयते यत्तेषां वास्तविकं मूलरूपं सुरक्षितं नास्ति । तत्रानेकांशाः लुप्ता सन्त्येव बहवोंशाः स्वार्थ-लिप्सया शिष्यैः, प्रशिष्यैः, सूतैः, कथकैः, प्रौढशिक्षाप्रचारकैः कथावाचकैः ब्रह्म--शैव--वैष्णव--भागवत–शाक्त– सौर–गाणपत्यादिविविधसम्प्रदायावलम्बिभिश्च प्रक्षिप्ताः । सम्प्रत्येतादृशा अंशा एवं मिलिताः, यत्तेषां निष्कासनं कठिनं जातं, किंवा सामान्यतोऽपेक्षितमपि नास्ति साम्प्रतम् । यतः रामायण-महाभारतादीनामालोचनात्मक-संस्करणेषु क्रमशः पुण्यपत्तनतः बडौदानगरतश्च प्रकाशितेषु च एवम्विधः प्रयासः कृतः, तत्रापि विप्रतिपत्तिः दृश्यते । अत एते ग्रन्था यथोपलब्धरूपेण ग्राह्याः । तत्र तु प्रक्षेपा अपि न हेयाः, सम्मान्या एव । ग्रन्थेऽस्मिन्नपि एषैव दृष्टिरवलम्बिता ।

एवमेव ग्रन्थेष्वेतेषु देश-काल-व्यक्ति-लिपिकादिभेदाद् अनेके पाठभेदाः प्राप्यन्ते । श्रुतिस्मृत्योरुपबृंहणहेतुषु पुराणेषु नवाः नवाः घटनाः विषयांश्च योजयित्वा विस्तारः

---

1. म. पु. 53/71

कृत:, तेषाञ्च जनजागरणार्थं सर्वाधिक: प्रचार: कृत:। एतस्मात्कारणादेव विविध-पुराणेषु तेषां विभिन्नसंस्करणेषु च पाठभेदा उपलभ्यन्ते। शोधकर्तॄणां कृते एते पाठभेदा अनेकशोऽप्युपादेया सिद्ध्यन्ति। ग्रन्थेऽस्मिन् कोषरूपेण सङ्कलितेषु निर्वचनेषु रामायणस्य महाभारतस्य पुराणानाञ्च विभिन्नसंस्करणेषु यत्किञ्चिद्भेदेनोपलब्धा: पाठभेदा यथावत् प्रदत्ता:, क्वचित्तु कोष्ठके विलिख्य सन्दर्भा: सङ्केतिता:।

**शब्दार्थ-सम्बन्ध:**

भाषाया: साहित्यस्य वा मूलाधारो शब्द:, य: खल्वर्थावबोधं जनयति। तयो: समृद्धि: तद्गतया शब्दार्थ–सम्पत्त्या भवति। एतयो: पारस्परिकसम्बन्धे शास्त्रेषु बहु विचारितम्[1], परमुचितमेव पतञ्जलि[2]-भर्तृहरि[3] प्रभृतिभि: भाषाशास्त्रिभिरनयो: नित्यसम्बन्ध: स्वीकृत: तथा च महाकविना कालिदासेन[4] गोस्वामिना तुलसीदासेन[5] च स्वालङ्कृतशैल्यामुक्तमतस्यैव पुष्टि: कृता। एतत्सर्वं मयान्यत्र यथावद् विशदीकृतम्।[6]

**निरुक्तं व्याकरणञ्च**

शब्दबोधाय विवेचितेषु शक्तिग्रहेषु व्याकरण-निरुक्त-कोषादीनां सर्वाधिकं महत्त्वं वर्तते। एते तु तत्र साहाय्यं विदधति। एतेषु शब्दानां व्युत्पत्ति-निरुक्ति-अर्थ-पर्याय-प्रयोगादयो विशदीक्रियन्ते। पुरा वैदिककालेऽपि महत्त्वमेतत्परिज्ञातम्। अत: वेदार्थज्ञानाय शिक्षा-कल्प-निरुक्त-व्याकरणच्छन्दोज्यौतिषाणां, षण्णां वेदाङ्गानां व्यवस्था कृता। एतेष्वनयो: न केवलं परिगणनं कृतम्, अपितु प्रामुख्यं सर्वथाऽनुभूतम्। फलत: पाणिनीय-शिक्षायां वेदपुरुषस्य 'निरुक्तं श्रोत्रमुच्यते'[7] तथा 'मुखं व्याकरणं स्मृतम्'।[8] अनेन रूपकेणानयो: सम्बन्धआवश्यकता वा सरलतयाऽनुमातुं शक्यते। यद्यपि शब्दपरिज्ञानस्य मूलं व्याकरणं वर्तते, तत्तु शब्दान् व्युत्पाद्य संस्कृत्याव्याकृतान् च व्याकृत्य गृह्णाति, परमाध्यात्मिकाधिदैविकाधिभौतिकार्थ—विशदीकरणाय निरुक्तस्यापि प्रामुख्य स्वीकृतं-'नानिरुक्तविद् व्याकुर्यादिति'। वस्तुत: निरुक्तस्य व्याकरणस्य चावधारणाभि: संस्कृतशब्दानां निर्वचनं नियन्त्र्यते। अत: शब्दानां

---

1. काव्यशास्त्र–दर्शन-व्याकरण-भाषाशास्त्रादिसम्बद्धग्रन्था: द्रष्टव्या:।
2. सिद्धे शब्दार्थसम्बन्धे च। 3. वाक्य 1/23
4. वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये। जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ ।। रघु. 1/1
5. अरथ गिरा जल वीचि सम कहियत भिन्न न भिन्न–रामचरित मानस।
6. शब्दार्थसम्बन्धविमर्श:—डा. शिवसागर त्रिपाठी—सारस्वती सुषमा, 25/2 सं. 2027
7. पा. शि. 41 8. पा. शि. 42

सम्यगध्ययने निरुक्तधारायाः व्याकरणधारायाश्च युगपदुभयोरन्यतमायाः वा साहाय्य-मपेक्ष्यते । ध्येयमिदं यन्निर्वचनेषु तु प्रायः प्रकृतिरेव निर्दिश्यते । तत्र तत्सम्बद्धाः लोकप्रचलितधारणाश्चानुस्यूता भवन्तीति रोचकोऽध्ययनविषयो भवति ।

ऋग्वेदे[1] वैदिकसाहित्ये[2] च विद्यमानानि निर्वचनान्यवलोक्य स्पष्टं भवति यत् निर्वचनपरम्पराऽतिप्राचीना । तदधिकृत्यानेकानि निरुक्तशास्त्राणि लिखितानि । एतेषु यास्काचार्यस्य योगदानमविस्मरणीयम् । अस्य निरुक्ते प्रयोगनिमित्तत्वस्या-र्थाश्रयत्वस्य[3] च प्राधान्यम् । व्याकरणन्तु व्युत्पत्तिनिमित्तकम् । परमेतन् निरुक्तस्यैव विकसितं नियमितं किंवा जटिलं रूपं प्रतीयते । अतएवात्रापि निपातन[4]–बाहुलक[5]–व्यत्यय[6]–पृषोदरादि[7]-उणादि[8]-संज्ञाप्रमाणादिभिः[9] लोकसिद्धरूपाणि स्वीकृत्य प्रयोग-निमित्तत्वमनुमतमेव । उक्तञ्च प्रयोगशरणाः वैयाकरणा इति ।

यथोपरि निर्दिष्टं यद् वेदार्थविशदीकरणाय निरुक्तमावश्यकं, ततस्तु व्याकरणं, यतः वैदिकाःशब्दाः लौकिक-व्याकरण–नियमैर्नाबद्धाः । तथैव लौकिकेतिहासपुराण-ग्रन्थानां सम्यगवबोधनाय व्याकरणमावश्यकं, परं तत्रापि निरुक्तस्यापेक्षा वर्तते, यत्खल्वद्यावधि पाणिनीयव्याकरणाक्रान्तमस्तिष्कैरुपेक्षितम् । वस्तुतः 'आत्मा पुराणं वेदानाम्'[10], 'इतिहासपुराणञ्च पञ्चमो वेद उच्यते'[11] वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः[12]' इत्यादिभिरुक्तिभिः[13] स्पष्टं यद् वेदस्थगूढविषयाणां पुराणेतिहासयो-रुपबृंहणं कृतम् ।

**अपाणिनीयप्रयोगाः**

अतः इतिहासपुराणेषु वैदिक—लौकिकोभयविधशब्दानां विषयाणाञ्च मिश्रणं वर्तते । यद्यप्यधिकांशाः शब्दाः व्याकरणनियमानुसारं प्रयुक्ताः, परन्त्वपरे बहवः शब्दाः व्याकरणविरुद्धाः विशेषतः पाणिनीयव्याकरणविरुद्धा अपि वर्तन्ते, ये 'आर्ष' इति पदेन व्यपदिश्यन्ते, परं कथनमिदमपशब्दत्वस्याशुद्धत्वस्य वा गन्धमावहति इति महती विडम्बना । तथ्यतस्तु एतादृशाः शब्दाः पाणिनीतरवैयाकरणनैरुक्तादिमतानुसारं साध्या एव । क्वचित्तु पाणिनीयव्याकरणेऽपि प्रकारान्तरेण सेद्धुं शक्यन्ते । यथा

1. वै. वा. भा. चि.—पृ. 24-117 2. वै. एटी. सम्पूर्ण
3. अर्थनित्यः परीक्षेत–नि. 2/1
4. तदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्—का.सू. 5/1/59
5. ल. कौ. कृदन्तम् 6. पा. 3/1/85
7. पा. 6/3/109 8. पा. 3/3/1
9. 'संज्ञाया' मिति सम्बद्धानि पञ्चाशदधिकसूत्राणि । द्र०–पा.का.भा. पृष्ठ 38
10. स्कन्द—रेवा 1/22 11. भा. पु. 1/4/20
12. स्कन्द प्रभास 2/90
13. द्र.–पा.टि 3/7 पृष्ठ 1

रुदन्ती[1] (रुदनं रुत् क्विप्। तम् अन्तति सम्बध्नाति इति कर्मण्यणि स्त्रियां ङीपि) युवती[2] (यौतेः शत्रन्तान्ङीपि) प्रभृतयः शब्दाः। तथापि ईदृशाः शब्दाः अपाणिनीया इत्येव कथितुं शक्यते। तथाहि 'भर्तव्या रक्षितव्या च भार्या हि पतिना सदा'[3] 'गावो बहुगुणा ददुः'[4], 'पूज्य देवं चतुर्मुखः'[5] 'सर्वानन्तफलाः प्रोक्ताः'[6] 'तस्याग्रतो नृपः स्नायात्',[7] 'भारतेषु स्त्रियः पुंसः',[8] 'लोकान् प्रकल्पयित्वा तु'[9], 'सद्भाव एषो भवते मयोक्तः'[10]। 'सोऽलभत् कर्मणा तेन'[11] उदरम्भरः,[12] जयमानः,[13] हिमवन्तचारिणि[14] गठन[15] पैंदुक[16]।

**निर्वचनपरम्परा**

नैकेषु पुराण-निर्वचनेषु वैदिक-निरुक्त-एकाक्षरप्रभृतिपरम्पराणां निर्वाहः कृतः। यथाहि **असुरः** (अप्रतिग्रहणात्तस्याः) (सुरायाः), 'असुः प्राणः स्मृतो विप्रैस्तज्जन्मानस्ततोऽसुराः); **अभिमन्युः** (अभीश्च मन्युमांश्चैव); अक्षरः (न क्षीयते न क्षरति); **अग्निः** (यस्माच्च नयति ह्यग्र्यां गतिम्); **अत्रिः** (अहं तृतीय इति); **अम्भः** (भान्ति यस्मात्); **अहिः** (हीनत्वात्); **आचार्यः** (आचिनोति च शास्त्रार्थान्, स्वयमाचरते यस्तु आचारे स्थापयत्यपि); **आदित्यः** (आदिभूतत्वात्); **इक्ष्वाकुः** (क्षुवतस्तु मनोर्जज्ञे); **उमा** (निषेधयन्ती ह्यु-मेति); **उर्वः** (जज्ञे उरुं भित्त्वा); **कश्यपः** (कश्यपानात्तु); **कुलपतिः** (कुलानि पातयत्येषः); **कृष्णः** (कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः); **केशवः** (यस्मात् हतः केशी); **गालवः** (गले बद्धः); **गिरिः** (अन्तर्निगीर्णत्वात्); **गुरुः** (गुकारस्त्वन्धकारार्थः रुकारस्तन्निरोधकः); **दण्डः** (दमनाद्दण्डनाच्चैव); **नक्षत्रं** (न क्षीयते यतस्तानि); **नारायणः** (आपो नारा इति प्रोक्ता·······अयनं तस्य ताः); **पिता** (रक्षणात्); **पुराणं** (यस्मात् पुरा ह्यनतीदं); **पुरुषः** (पुरि शेते); **भरद्वाजः** (भर द्वाजमिति); **मरुत्** (मा रोदीः); **मान्धाता**

---

1. रुदन्ती सभयं शीघ्रं—पद्म. पु.उ.ख. 242/247; तु.–चम्पू भारतम् 1/78; हिन्दी भाषायां राष्ट्रकविमैथिलीशरणगुप्तस्य साकेते–'उस रुदन्ती विरहणी का'। (शपः लुक्त्वात् शप्श्यनोर्नित्यमिति नुमाभावः अतः रुदतीति)।
2. युवन् शब्दात् 'यूनस्तिः' इति ति प्रत्यये, युवतिः इति।
3. मा.पु. 21/68
4. भा.पु. 3/3/26
5. वामन. पु. 49/37
6. म.पु. 74/4
7. अ.पु. 185/13
8. कू.पु. 47/21
9. वा.पु. 6/34
10. वि.पु. 2/13/44
11. वा.पु.उ. 22/81 (ये लभन्त्युत) तु.–लि.पु.पू. 10/5
12. गरुड़ 1/205/82 (उदरम्भरिः—पा. 3/2/26)
13. गरुड़ 2/17/44
14. गरुड़ 1/38/5 (हिमवच्चारिणि—हिमवत् शब्दस्य प्रातिपदिकत्वात्)

15-16. एतादृशाः शब्दा असंस्कृता प्रतीयन्ते।

(मामयं धास्यति); **मित्रं** (मिदेर्नन्दतेः प्रीयतेर्वा संत्रायते मानद मोदतेर्वा); **मेदिनी** (मधुकैटभयोः मेदः-संयोगात्); **राक्षसः** (रक्ष्यतामेष यैरुक्तम्); **राजा** (जनरञ्जनात्); **रुद्रः** (रोदनाद् द्रावणाच्चैव); **वासुदेवः** (सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः); **वृषल;** (वृषो हि भगवान् धर्मः तस्य यः कुरुते ह्यलम्); **वृषली** (स्ववृषं परित्यज्य परवृषे वृषायते); **हृषीकेशः** (हर्षात्सौख्यात्सुखैश्वर्यात्) प्रभृतयः[1]।

एवं दिङ्मात्रमुदाहृताः शब्दाः तेषां निर्वचनानि च। विशेषतस्तु तत्तद्ग्रन्थेषु अथवाऽस्मिन् निर्वचनकोषे विस्तरशो द्रष्टव्याः। अनेकत्र पाणिनीयव्याकरण-दृष्टयपेक्षया निरुक्त-दृष्टयाः प्राधान्यम्। एतेषां शब्दानां निर्वचनानां वा संशोधनस्य स्वशैल्या यैः कैश्चित्प्रयासः क्रियते, तदपि न वरम्। पं. बलदेवोपाध्यायेन 'पुराण विमर्शः' नामके ग्रंथे लिखितमुचितमेव—

व्यावहारिकशब्दौघान् पुराणानि प्रयुञ्जते।
अपाणिनीयप्रयोगस्तु भूषणं न तु दूषणम्॥[2]

**कोषः कोषसाहित्यञ्च**

वाङ्मयविशेषेऽनेके **यौगिक-योगरूढ-रूढादिशब्दाः** प्रचलिताः भवन्ति। एते अर्थ-पर्याय-व्युत्पत्ति-निरुक्ति-प्रयोग-तत्सम-तद्भव-तुलनादिभिः वैशिष्ट्यमावहन्ति। शास्त्रीय-व्यावहारिकज्ञानाय तेषां आवश्यकता वर्धते। विशालः शब्द-भाण्डारः सर्वैः सर्वत्र सदा संस्मर्तुं न शक्यते, अतः एतेषां संग्रहस्यावश्यकता भवति। एष संग्रह एव कोष इति व्यपदिश्यते।

संस्कृते कुश्यते संश्लिष्यते इति कुश् विश्लेषणे धातोः निष्पन्नः 'कोशः' अथच कुष्यते आकृष्यते इति कुष् निष्कर्षे धातोः व्युत्पन्नः कोषः इति घञ् प्रत्ययान्तौ शब्दौ पर्यायत्वेन प्रयुज्येते। यद्यपि कोश (कोष) शब्दः कुड्मल-पात्र-आकार-खड्गपिधान-कृमि-नीड-अण्ड-दिव्य-जातिकोश-शब्दार्थसंग्रह-हिरण्य-पात्र-पुस्तक-भाण्डागार-वारिवाह-शस्त्रादिरूपेण नानार्थकः, परमत्र प्रकृतसन्दर्भे 'डिक्शनरी', 'लेक्सिकोग्रैफी' 'लुगत' 'वर्तेरबुख' इति बहुप्रचलितेऽर्थे विचार्यते। यथा व्यक्तेः राष्ट्रस्य वा सम्पन्नता वित्त-कोषेण, तथैव साहित्यस्य शब्दकोषेण भवति। यथा च भूमिखाता प्रयोगातीता च सम्पत्तिः व्यर्था, तथैव अप्रयुक्त-विस्मृतार्थक-मृतप्राय शब्दानां स्थितिः विद्यते। एवमेव यथा राजा गृहस्थो वा वित्तकोषं सदापेक्षते, तदभावे च क्लिश्नाति, तथैव विद्वान्सोऽपि शब्दकोषस्य महतीमावश्यकतामनुभवन्ति। तदभावेऽधीति-बोधाचरण-प्रचारणेषु महद्-दुःखं प्राप्नुवन्ति। यथोक्तं सुभाषितेऽस्मिन्—

---

1. उद्धरणानां सन्दर्भाः निर्वचनकोषे यथास्थानं द्रष्टव्याः।
2. पुराणविमर्शः—पृ. 587

कोषश्चैव महीपानां कोषश्च विदुषामपि ।
उपयोगो महान् यस्मात् क्लेशस्तेन विना भवेत् ।।[1]

कोषसाहित्यस्य महत्तामावश्यकताञ्च वीक्ष्य संस्कृतेऽस्य सर्जनाधारा अजस्रं प्रवाहिता । अतएव वैदिकनिघण्टुत आरभ्याद्यावधि अनेके वैदिक-लौकिक कोषाः, तेषु चानेकाः टीकाः लिखिताः । अद्यानेके पर्यायपरक-अनेकार्थक-एकाक्षर-द्यक्षर-द्विरूप-त्रिरूपाः पदानुक्रम-अव्यय-उणादि-ओषधि-वनस्पति-ज्यौतिष-खगोल-धर्म-भाषा-विज्ञान–गणितादिविविधविषयकाः रामायण-महाभारत-पुराणादिग्रन्थविषयकाः एकभाषिक-द्विभाषिक-त्रिभाषिक-बहुभाषिकाः वैज्ञानिक-तकनीकीशब्दावलिसम्बद्धाश्च कोषाः विश्वकोषाः विनिर्मिताः । अपरञ्च वाक्यकोष-उद्धरणकोषादयोऽपि लिखिताः । एते खलु समये समयेऽध्येतॄणामनुसन्धित्सूनाञ्च ज्ञानपिपासां शमित्वा सौविध्यमुत्पादयन्ति ।

## निर्वचनं वृत्तयश्च

निर् पूर्वकात् वच् धातोः ल्युट् प्रत्ययान्तान् निर्वचनाज् ज्ञायते यद् शब्द-विशेषो ऽर्थविशेषे कथं प्रयुज्यते ? अमुकं नाम वस्तुविशेषस्य कथं जातं तथा चाऽ मुकेऽर्थे शब्दविशेषः कथं प्रयुज्यते, अथचार्थोऽयं तस्माच्छब्दात् कथं द्योत्यते इति सर्वं निर्वचन-प्रक्रिययैव ज्ञायते । निर्वचन-शब्दस्य आंग्ल-पर्यायः 'इटीमालोजी' (Etymology) यथार्थद्योतकेन 'एटिमास' शब्देन एवं संख्यानबोधकेन 'लोगोस' शब्देन च निर्मितेन 'एतिमालोजियो' शब्देन सम्बद्धः । तदनुसारं तत्र दर्शन-क्षेत्रे निर्वचनपरकशोधद्वारा शब्दविशेषं परिचित्य तस्य उचितप्रयोगोऽपेक्षितः । भारतीये साहित्ये तु प्रारम्भत एवेयं भावना वैदिक-निर्वचनेषु निरुक्तादिग्रन्थेषु परिलक्ष्यते । अनयैव दृष्ट्या निरुक्त-टीकाकारेण निर्वचनमेवं परिभाषितम्—

'अपिहितार्थस्य परोक्षवृत्तौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनमिति[2] ।

अत्र परिभाषायां तिस्रो वृत्तयः संकेतिताः । प्रथमा तु प्रत्यक्षवृत्तिः व्याकरणाश्रया सुबोधा च[3] । अपरा परोक्षवृत्तिः कयापि वृत्या अर्थप्रामुख्यमभिलक्ष्य निरुच्यते-'अथानन्वितेऽर्थे प्रादेशिके विकारेऽर्थनित्यः परीक्षेत. केनचिद् वृत्तिसामान्येन'[4] । अन्या अतिपरोक्षवृत्तिः, यत्र कस्या अपि वृत्तेराश्रयाभावाद् 'अक्षरवर्णसामान्यात् निर्ब्रूयात् । न 'त्वेव न निर्ब्रूयादिति निरुक्त-सिद्धान्तः'[5] । अत्र कल्पनाश्रयत्वमपि अपेक्ष्यते । वैयाकरणस्तु क्लिष्टकल्पनया व्युत्पत्तिं कुर्वन्तु नाम, परं नैरुक्ताः न

1. संस्कृत-कोष—उद्भव और विकास—पृ. 12, पा. टि. 2 उद्घृतम् ।
2. नि. दु. 2/1/1
3. द्र.-दुर्गवृत्ति पृ. 98
4. नि. 2/1/3
5. नि. 2/1/4

व्याकरणमुखापेक्षिणः इति तैः घुष्यते–'न संस्कारमाद्रियेत' इति[1]। एतद्वृत्तिपरकं निर्वचनं काठिन्यवगाहते इत्यत्र प्रत्यक्ष-परोक्षादिवृत्तीनां भाषागतवर्ण-ध्वनि-अर्थ-विकाराणां सर्वसम्भवोपाया क्रियन्तेऽवयवार्थस्य विशदीकरणाय। एषु निर्वचनेषु मतवैभिन्यं स्वाभाविकम्। यथाऽस्मिन् कोशग्रन्थे दिङ्मात्रं विवेचितेषु शब्देषु परिलक्ष्यते।

## निर्वचनाध्ययनपरम्परेतिहास :

यथोपरि लिखितं निर्वचन-परम्परातिप्राचीना. या खलु संहिताब्राह्मणारण्यकोपनिषत्सु, किंवा वेदाङ्गप्रतिशाख्यचरणव्यूहादिके समस्तेऽपि वैदिके साहित्ये प्राप्यते। वैदिकनिर्वचनेषु डॉ. फतहसिंह महाभागेन "वैदिक एटीमालोजी"[2] नामके ग्रन्थे कार्यं कृतं, तथाद्भुतानि रोचकानि च तथ्यानि प्रस्तुतानि। अपरञ्च डॉ. सुधीर कुमार गुप्त[3]-पण्डितशिवनारायणशास्त्री[4] श्रीयुधिष्ठिरमीमांसक[5]प्रभृतिभिः विद्वद्भिः क्षेत्रेऽस्मिन् विचारः कृतः।

निर्वचनसम्बधि शास्त्रीयं विवेचनं यास्ककृते निरुक्तशास्त्रे कृतं, यस्य विमर्शः डा. स्कोल्ड-राजवाडे-सिद्धेश्वर वर्मा[6]-डा. सुधीर कुमार गुप्त[7]-पं. शिवनारायण शास्त्री[8]–पं. उमा शंकर ऋषि[9] प्रभृतिभिः बहुभिः भाषाविद्भि कृतः। आचार्यशौनकस्य कार्यं बृहद्देवतायां[10] निरुक्तपरम्परायामेव विद्यते।

यद्यपि व्याकरणस्य व्युत्पत्तिनिमित्तकं कार्यं किञ्चिद् भिन्नं, तथापि क्षेत्रेऽस्मिन् योगदानमस्याविस्मरणीयम्।[11] कोशगता व्युत्पत्तयोऽप्यस्यामेव परम्परायां विद्यन्ते। महाभारत-रामायणे-पुराण–उपपुराण–औपपुराणस्मृति–दर्शन–पुराणेतरसाहित्य-काव्य साहित्यादिषु तथा च शङ्कराचार्यकृत-विष्णुसहस्रनाम-भाष्ये, भास्कररायकृत-ललितासहस्रनामभाष्ये, नीलकण्ठकृतशिवसहस्रनामभाष्ये, मध्वादिकृतासु नैकासु टीकासु अहिर्बुध्न्यसंहितादितन्त्रग्रन्थेषु चोपलब्धनिर्वचनेषु व्याकरणस्य निरुक्तस्य च क्वचित् एकाक्षरपरम्परायाश्च सम्मिलितं रूपं दृश्यते। परं व्याकरणापेक्षया निरुक्तपरम्पराया उत्तरोत्तरं ह्रास एव दृश्यते।

उल्लेख्यमिदं यद् योरोपीयभाषास्वनेकत्र शब्दपरकाध्ययनस्य प्रयासः कृतः। अत्र शब्दस्य स्वान्तं परिज्ञाय तत्रानुस्यूता संस्कृतिः समुद्घाटिता। नेदरलैण्डवासी

---

1. नि. 2/1/3
2. संस्कृति सदन-कोटा 1952
3. वे. भा. द. चतुर्थ अध्याय
4. नि. मी. अ. 17
5. सं. व्या. इ.–अ. 2
6. एटी. या.
7. वे. वा.–वेदाङ्क 17/1
8. नि. मी. अ. 18
9. निरुक्तम्
10. बृ.-अ 1, 2
11. नि. 1/15/1

श्रीखोन्दामहाभागेन तथा च वेटी–हाइमान–एस् उलमान–सी.डी. बक– आनन्दकुमार स्वामी प्रभृतिभिः विद्वद्भिः शब्दाश्रयेण संस्कृतेः विवर्त्तशीलता परीक्षिता । हिन्दी-भाषायामपि भोलानाथतिवारी–हरदेवबाहरी–केशवरामपाल-निशान्तकेतुप्रभृतिभिः कोविदैः एतादृशः प्रयासोऽकारि । तैः व्युत्पत्तिपरकमध्ययनं तस्य च भाषावैज्ञानिक-परीक्षणं भाषोपभाषाविभाषादीनां प्रदेशीयं क्षेत्रीयञ्चाध्ययनं यत्र तत्र लोकदृष्टेः समन्वेषणमपि सुष्ठु विहितम् ।

संस्कृते तु निर्वचनाध्ययनधारा प्रायोऽवरुद्धा । इतस्ततः पत्रिकासु,[1] शोध-ग्रन्थेषु[2], पुस्तकेषु[3] च प्रकीर्णत्वेनापर्याप्तो विचारः प्रस्तुतः । निर्वचनाध्ययनधारा-मविच्छिन्नतामानेतुं मया रामायण-महाभारतोपलब्धनिर्वचनानामध्ययनं "रामायण एवं महाभारत का शाब्दिक विवेचन" नामके ग्रन्थे कृतम्[4] । तत्र प्रभूतशब्दानां निर्वचनानि तथा च तेषां सप्रामाणानि सोदाहरणानि विवेचनानि प्रस्तुतानि । अस्या-मेव धारायां पुराणेषु कृतप्रयासस्य किञ्चिद् दिग्दर्शनं कोशेऽस्मिन् प्रस्तुतम् ।

### निर्वचन-रीतिः

शब्दनिर्वचनस्य वैदिकीं परम्परामाश्रित्य निरुक्तादिग्रन्थेषु निर्वचनकपरकनियम-सिद्धान्ताः निर्धारिताः । विद्वद्भिश्च निर्वचनशैलीमधिकृत्य विचारः कृतः, परं विवेच्यग्रन्थेषु प्रकृतविषयस्य सिद्धान्तपक्षो न वर्णितः, नाप्यवसर एवासीत् । यत एते ग्रन्थाः मूलतः काव्येतिहासाः । तथापि भाषानिर्वचनसम्बद्धाः कतिपयसङ्केताः यत्र तत्र प्राप्यन्ते । यथा महाभारते श्वेतकेतुमतेन शब्दार्थयोः व्याख्या प्रस्तुता—

---

1. एटिमालोजिकल कान्सेप्ट इन दी पुराणाज-डा. वी. एस. शुक्ल–जैन भारती महाभारते निर्वचनानि-डा. सत्यव्रत शास्त्री, ला. ब. शा. केन्द्रीय विद्यापीठ पत्रिका, दिल्ली, तथा भाषा-सारस्वती सुषमा, विश्वम्भरादिपत्रिकासु प्रकाशिताः मम शोध-लेखाः ।

2. पौराणिक पुराकथाओं का आलोचनात्मक अध्ययन (अ 2) डा. वी. एस. शुक्ल, प्राचीन पुराणों में चित्रित भारतीय समाज की दशा (अ 8) डा. शङ्करसिंह झाला, ब्रह्मवैवर्त्त पुराण-एक अध्ययन (अ. 3) डा. वैकुण्ठनाथ शर्मा ।

3. इतिहास पुराण का अनुशीलन—(कतिपय लेखमात्रम्); पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन (अ. 4) रामशङ्कर भट्टाचार्य; रामायण-ए लिंग्विस्टिक स्टडी (अ. 8)—डा. सत्यव्रत शास्त्री आदयः ।

4. देवनागर प्रकाशन, जयपुर 1986

व्यत्ययेन च वर्णानां परितापकृतो हि यः ।
स शब्द इति विज्ञेयस्तन्निपातोऽर्थ उच्यते ।।[1]

एकत्र तु व्याकरणस्य लक्षणं प्रदत्तम्—

वर्णाक्षरपदार्थानां सन्धिलिङ्गविवक्षितम् ।
नामधातुविवेकार्थं पुरा व्याकरणं स्मृतम् ।।[2]

अपरत्र निर्वचनेऽर्थस्य लोकस्य च प्राधान्यं वर्णितम्—

सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते ।
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।।[3]

अन्यत्र आर्थनिर्वचनसाहाय्यत्वेन पञ्चार्थविशेषाणां परिगणनं कृतम्—

सौक्ष्म्यं सांख्यक्रमौ चोभौ निर्णयः सम्प्रयोजनम् ।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ।।[4]

अथच निरुक्तं व्याख्यातमेवम्—

नामधातुविभक्तीनां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ।।[5]

निघण्टु निरुक्ताकारश्च तत्रैव सुस्मृतः—

'नैघण्टुक पदाख्यातं विद्धि मां वृषमुत्तमम्[6]
'यास्को मामृषिमव्यग्रो नैकयज्ञेषु गीतवान्'[7]

हरिवंशाज्ज्ञायते यत् निर्वचनपरम्पराऽतिप्राचीनासीत्, नैरुक्ताश्च सम्मानार्हा आसन् । वायुपुराणे ब्राह्मणग्रन्थीयनिर्वचनस्वरूपमभिलक्ष्य निर्वचनमेवं परिभाषितम्-

'तथा निर्वचनं ब्रूयाद् वाक्यार्थस्यावधारणम्[8]'

तत्रैव विषय-गणना-प्रसङ्गे निर्वचनमपि विषयत्वेन स्वीकृताम् ।

'तथा निर्वचनं प्रोक्तं कल्पस्य च परिग्रहः[9]

तत्र निरुक्तमपि स्मृतं प्रतीयते,—'निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम्[10] अत्रैव केतुमालशब्दस्य निर्वचने कर्मजनाम्नः शब्दश उल्लेखः प्राप्यते ।[11]

---

1. महा, आश्व, अपे. 1/4/1666  2. तत्रैव 1/4/2666
3. महा. चि. उद्योग 43/36  4. तत्रैव 320/79
5. महा. आश्व. अपे 1/4/2673
6. महा. चि. 12/342/88  7. महा. 12/330/23
8. वा. पु.पू. 59/134  9. वा. पु.पू. 1/56
10. तत्रैव 45/76  11. तत्रैव 35/36

नारदमहापुराणस्य पूर्वभागे द्वितीयपादे त्रिपञ्चाशत्तमेऽध्याये निरुक्तस्य विस्तृतं वर्णनं कृतम् ।

(1) इतिहासपुराणग्रन्थगतनिर्वचनात्मकशब्देषु निर्वचनानां या रीतिः समाश्रिता, सा परम्परामावहन्त्यपि किञ्चिद् वैशिष्ट्यमावहति[1] । तथाहि क्वचिन् निर्वचनेषु निर्वचनीयपदं प्रयुज्यते । क्वचित् प्रत्यक्षतो ऽ प्रत्यक्षतो वा प्रकृतेरुल्लेखो भवति, परं प्रत्ययस्योहा ऽ पेक्ष्यते । क्वचिन्निर्वचनप्रदर्शनार्थं निर्वचन्ति, निरुच्यते, कीर्त्यते, भण्यते, प्रोच्यते, अभिधीयते, उच्यते, कथ्यते, विदुः प्रभृतिपदानि प्रयुज्यन्ते ।

(2) नामपरकनिर्वचनेषु तु नाम (नाम्ना), भविष्यति, नाम स्थास्यति, नाम चक्रुः, नाम निर्वृतिः, नाम नामतः, गास्यन्ति, प्रोक्तः, इति ख्यातम् प्रभृति वाक्यांशाः प्रयुक्ताः ।

(3) विष्णुपुराणस्यैकस्मिन् स्थले तु 'रैवतो नाम नामतः' इत्यत्र श्रीधर स्वामिनोल्लिखितं यद् रैवतः स्वनाम्ना प्रसिद्धः न तु रेवतपुत्रत्वात् । परमेषा व्यवस्था न सर्वत्र मान्या दृश्यते । वस्तुतः नामकरणनिर्देशस्यैषा शैली प्रतीयते, या निर्वचनेष्व-नेकत्रोपलभ्यते ।[2] डा. रामशङ्कर भट्टाचार्यमहाभागेन तु 'इतिहासपुराण-अनुशीलन' नामके ग्रन्थे सा समस्यात्वेन प्रस्तुता ।[3]

(4) अपरञ्च क्वचित् पादपूर्त्यर्थं च, वा, ह, तु, ततः, वै, निश्चयः, शब्दितः, कीर्तितः, स्मृतः, प्रभृतीनि पदानि प्रचुरतः प्रयुक्तानि । यत्र तत्र तस्मात्, तेन, ततः प्रभृतीनि पदानि आश्रित्य तृतीयान्त पदैः पञ्चम्यन्तपदैर्वा भाववाचकप्रत्ययैश्च कारण-निर्देश-सहितानि निर्वचनानि प्रयुक्तानि ।

(5) कदाचिद् ब्राह्मण-शैलीमाश्रित्य षष्ठ्यन्तानि निर्वचनानि प्रस्तुतानि ।

(6) संख्यापूर्वनिर्वचनेषु द्विजिह्वः, द्वैपायनः, त्रिपुरारिः, त्रिविक्रमः, त्रिशङ्कुः, त्र्यम्बकः, चतुर्भुजः, पञ्चशिखः, षडाननः, अष्टावक्रः, सहस्राक्षः, अयुताक्षः प्रभृतिशब्दा द्रष्टव्याः ।

(7) निर्वचनेषु वेदमूलकता-प्राचीनता–आख्यानपरतादिद्योतनार्थं भूतकालस्य, शाश्वततथ्यानुद्भावयितुं तथा विध्यर्थे, आज्ञार्थेऽपि वर्तमानकालस्य, वक्तुः ग्रन्थ–कारस्य वा धारणा–कामनाशीर्वादादिकं प्रकटयितुं भविष्यत्कालस्य च प्रायः प्रयोगः कृतः, परमत्र विप्रतिपत्तयोऽपि प्राप्यन्ते ।

(8) निर्वचनेषु प्रायः प्रथमपुरुषः प्रयुक्तः, परमाख्यानात्मक–संवादात्मक-निर्वचनेषु मध्यमपुरुषस्य, उत्तमपुरुषस्यापि प्रयोगाः दृश्यन्ते ।

---

1. उदाहरणानि तु निर्वचनकोषे द्रष्टव्यानि ।
2. भद्राश्वो नाम नामतः,-ब्रा. पु. पू. 35/25; लोहितो नाम नामतः-लि. पु.पू. 23/8
3. इति. पु. अनु–पृ. 13

(9) यत्र-तत्र प्रश्नोत्तरशैलीमाध्यमेन नाम-निर्वचनानि प्रदत्तानि । यथा धृतराष्ट्रे पृष्टे सञ्जयः वासुदेवादीनां,[1] उत्तरे पृष्टे अर्जुनः स्वनाम्नां,[2] अर्जुने पृष्टे कृष्णश्च स्वनाम्नां[3] निर्वचनानि प्रददति । एवमेव लिङ्गपुराणे,[4] वायुपुराणे[5] मत्स्य-पुराणे[6] साम्बपुराणे,[7] देवीपुराणे[8] तथा चान्येष्वपि पुराणेषु[9] एतादृशानि निर्वचनानि लभ्यन्ते ।[10] स्तोत्रेषु सहस्रनामसु च नाममाहात्म्येषु देव-देवी-नाम-निर्वचनानि स्पष्टतः संकेततो[1] वा प्राप्यन्ते ।[12]

(10) अनेकत्र शब्देषु स्पष्टनिर्वचनं न लक्ष्यते, परं तत्र निर्वचनमभीष्टं प्रतीयते । एतानि संकेतित-निर्वचनानि क्वचित्समासविग्रहेण, क्वचित् सत्यनामा प्रकाशते, नामधेयानुरूपस्य, प्रभृतिवाक्यांशैः क्वचिद् विशेषणपदैः, क्वचिद् आख्यानैः क्वचित् शब्दार्थव्याख्यया, क्वचिदालङ्कारिक भाषया वा प्रदत्तानि ।

(11) यथोपरि लिखितमितिहासपुराणयोः प्रमुखं लक्ष्यं वेदोपबृंहणमप्यासीत् । यत्खलु आख्यानैः, उपाख्यानैः व्याख्याविशदीकरणैः निर्वचनैश्च कृतम् । एतादृङ् निर्वचनेषु क्वचित् पुराणकारैः निर्वचनस्य वैदिकता शब्दशः उल्लिखिता[13] अन्यथा 'प्रोक्तमिति श्रुतौ' 'विश्रुतं', 'वदन्ति', इति श्रुतिः, इति प्राहुः, स्मृतः, प्रभृतिपदैः वैदिकतां निर्दिश्य निरुक्तानि ।[14] क्वचित्तु वेदमूलकता सुस्पष्टा यथा अघ्न्या[15] असुर[16]

---

1. महा. 5/68/2
2. महा. 4/39/8
3. महा. 12/328
4. लि. पु.–अ. 70
5. वा. पु.–अ. 4,5
6. म. पु. अ. 145
7. साम्ब—अ. 8
8. दे.पु.–अ. 45, 37
9. पद्म-स्कन्दपुराणादिषु
10. महा. 2/28
11. हरि 2/109
12. विष्णुसहस्रनाम–शिवसहस्रनाम–युगलसहस्रनाम (ना. पु. पू. 3/82)
13. पुन्नाम्नो नरकात्त्राति पुत्रस्तेनेह गीयते ।
    शेषः पापहरः शिष्यः इतीयं वैदिकी श्रुतिः । वामन पु. 60/76
14. निर्वचनकोषः द्रष्टव्यः ।
15. महा. चि. 262/47; स्कन्द कु. 45/28; तु.–मा. संहिता 8/43; नि. 2/11
16. वा. पु. 9/5: तु. तेन असुना असुरानसृजत्, तदसुराणामसुरत्वम् तै.–ब्रा. 2/3/8/2

रुद्र[1]—पुत्र[2] ब्रह्म[3]—विष्णु[4]—पुरुष[5]—गायत्री[6] प्रभृतिशब्देषु लक्ष्यते । अन्यथा क्वचित् मन्त्रांशमुद्धृत्य, वैदिकनिर्वचनं तद्भावं वा स्वीकृत्य,[7] वैदिकपरम्परामवलम्ब्य[8] वैदिक-तथ्यान् पौराणिकशैल्यां प्रस्तुत्य[9], नैरुक्तशैलीमाश्रित्य,[10] अनिश्चितवैदिकनिर्वचनानि आख्यानादिभिः संयोज्य तत्र च निश्चितता[11] पूर्णतां[12] वा प्रदर्श्य विहितानि । कदाचित्तु वैदिकमन्त्रं निर्वचनशैल्या व्याख्याय तस्य महत्त्वं प्रतिपादितम् । यथा प्रसिद्धगायत्री मन्त्रस्य[13] सवितृवरेण्य-भर्ग-देव-धीमहि–चोदयात् पदानां निर्वचनानि पुराणशैल्या प्रदाय सम्पूर्णः मन्त्रः अग्निपुराणे[14] व्याख्यातः ।

(12) कतिपयनिर्वचनेषु आंशिकी वेदमूलकता दृश्यते । यथा रुद्रस्य भागवत-पुराणगते[15] निर्वचने 'अरोदीः' तथा शतपथब्राह्मणीये[16] निर्वचने 'रोदयन्ति' पदे ध्येये । शरीरमित्यस्य मत्स्यपुराणगतनिर्वचने सांख्यदृष्टिः, न तु वैदिकी दृष्टिः ।[17]

(13) यत्रकुत्रापि वैदिकपदध्वनिसाम्यवशादेव अद्भुतनिर्वचनानि प्राप्यन्ते, यत्र इक्ष्वाकुः क्षुवतः, अश्विनौ अश्रुतः, नासत्यौ च नासातः जाता उपवर्णिताः । एतानि निर्वचनानि विचारणीयानि ।

(14) शब्दविशेष-सन्दर्भे वैदिकनिर्वचनानां बहुलतां इतिहासपुराणगतनिर्वचनानामल्पतां वीक्ष्य प्रतीयते यद् वैदिकार्थसम्पत्तेः उतरोत्तरह्रासः जातः । यथा कश्यपशब्दस्य निर्वचनं तैत्तिरीय आरण्यके[18] 'कश्यपः पश्यको भवति, यत् सर्वं परिपश्य

---

1. भा.पु. 3/2/4; तु.-यदरोदत्तस्माद्रुद्रः-श. 6/1/3/17,लि.पु.पू. 22/24, तु. प्राणा वै रुद्राः—जै. उप. ब्रा. 4/2/6, ते च एकादश-श. 11/6/3/7
2. वामन पु. 6/76; तु.–पुन्नामनरकमनेकशततारं तस्मात् त्राति–गो. ब्रा. 1/1/2
3. वि. पु. 3/3/21, तु.–यस्मात्परमपरं परायणं च वृहद् बृहत्या बृंहयति, तस्मादुच्यते परं ब्रह्म–अथर्वशिरः उप.–ईशाद्यष्टोत्तरशत उप. पृ. 145
4. वि. पु. 3/1/46; तु.–कौ. ब्रा. 8/2
5. नि. को.; तु. पुरुषः सर्वासु पूर्षु, पुरिशयः–श. 14/5/5/18
6. दे. पु. 37/54; तु.–श. 6/1/1/15; नि. 7/12
7. पुत्रः, ब्रह्म
8. कः, पुरुषः, विष्णुः
9. यक्षः, राक्षसः
10. अभिमन्युः, वसिष्ठः
11. मरुत्
12. उदकं, पृथ्वी
13. ऋक् 3/62/10
14. अ. पु. 216 1–18
15. भा. पु. 3/12/४–10
16. श. ब्रा. 11/6/3/7
17. अथ यत् सर्वमस्मिन् प्रश्रयन्ति --श. 6/1/1/4
18. तै. आ. 1/8/8

तीति सौक्ष्म्यात्' प्रदत्त, परं पुराणेषु[1] भिन्नप्रकृत्या कृतम् । अग्नि-आदित्य-पुरुष-निर्वचनेष्वऽपि अयमेव निष्कर्षः । कदाचित्तु वैशद्यमपि जातम् । यथा 'आचार्य' शब्द-निर्वचनं निरुक्त-परम्परायां विद्यते, परं तत्र स्वयमाचरते यस्मादिति वायुपुराणीयं योगदानं स्तुत्यम् ।[2]

(15) निर्वचनेषु क्वचिद् धातूनां विकसितार्थः प्रयुक्तः[3] । क्वचिद् वैदिक-निर्वचन-भिन्न-धात्वर्थमाश्रित्यऽऽर्थनिर्वचनानि कृतानि[4] । क्वचिच्च परम्परां विस्मृत्य नवनिर्वचनानि प्रदत्तानि[5] ।

(16) निर्वचनेष्वनेकत्र वैदिकतायाः स्मरणं कृतं, परमुल्लेखः संहिता-ब्राह्मणेषु न प्राप्यते, यथा अधोक्षजः, कर्दमः, पुलहः (तपोवाची 'पुल' शब्दः स्फुटवाची 'ह' निपातः वैदिक ग्रन्थेषु न) अविमुक्तः ('अवि' शब्दः पापार्थे वैदिकग्रन्थेषु न प्रयुक्तः यथा निर्वचने संकेतितः) । 'राधा' शब्दस्य निर्वचनं सामवेदे निरूपितमिति ब्रह्मवैवर्त्त-पुराणे लिखितम्[6] । ततश्च रेफ-आ-ध-आ इत्येषामर्थं दत्वा एकाक्षरनिर्वचनं कृतम् । परमेतादृशं निर्वचनं सामसंहितायां ब्राह्मणे वा न प्राप्यते । एवमेव रुद्रशब्दस्य 'रुद्दुःखं द्रावयति'[7] इत्येकाक्षरनिर्वचनं वैदिकसाहित्ये न लभ्यते ।[8]

(17) बहुत्र निर्वचनेषु वैदिकमूलं न प्राप्यते[9] । क्वचित् कल्पनायाः विशेष आश्रयो गृहीतः ।[10] 'शल्य'–निर्वचने तु शब्दशः स्वीकृतमपि । कतिपयेषु औचित्य प्रदर्शनलालसा लक्ष्यते[11], एतानि कौतुकाधायकानि तु भवन्ति, परं न विचारसहानि । अपराण्यतिशयोक्तिपूर्णानि, परं न विश्वासप्रदानि ।[12] वस्तुत आर्थ-निर्वचनेषु सर्वमिद् सुलभम् । एतेषु वाच्यार्थं न स्वीकृत्य प्रतीकात्मकोऽर्थः ग्राह्यः ।[13] अद्भुतोत्पत्तिपरकेषु निर्वचनेषु दृष्टिरेषा निक्षेप्या एव ।[14]

(18) आख्यानप्रियता मनुष्यस्य स्वाभाविकी प्रवृत्तिः, या वैदिकसंवाद-सूक्तेभ्य आरम्याद्यावधि सर्वत्र दृश्यते । एतस्य लाभः कथकैः व्याख्याकारैश्च सूक्ष्म-गहन-विषयाणां विशदीकरणे गृहीतः । इतिहासपुराणग्रन्थेष्वाख्यानपरकानि निर्व-चनानि सर्वाधिकानि प्राप्यन्ते । आख्यान-संवलितेषु व्यक्तिवाचकसंज्ञानिर्वचनेषु

---

1. महा. 13/95/29; वा.पु.उ. 4/115; मा.पु. 18/3
2. वा.पु.पू. 59/30
3. पशुपतिः
4. परीक्षित्, राजा
5. पुरुष (3)–7/11
6. ब्र.वै 4/13/102
7. शि.पु. 6/9/14
8. पु.वे.सा.स.—पृ. 349
9. जातवेदाः, केशवः·······।
10. चिरकारी, निषाद····—
11. इक्ष्वाकु-और्व–जाम्बवान्·······
12. गोविन्द–3, पञ्चशिख–मधु-कैटभ·······
13. अश्विनौ, अङ्गिराः·······
14. अश्विनौ-इक्ष्वाकुः जाम्बवान्·······

प्राय: दृश्यते, यदेतानि पूर्वं तु अन्वर्थत: प्रयुक्तानि, कालान्तरे च सामान्यनामकोटिं धारयन्ति ।[1]

(19) इतिहासपुराणग्रन्थेषु कतिचिद् दुर्बोधनिर्वचनानि प्राप्यन्ते ।[2] टीकाकारा: विचारकाश्च एतानि स्वज्ञानपरिधौ व्याख्यान्ति, परं तत्र मतवैभिन्न्यं स्वाभाविकम् । महाभारते आख्यानविशेषसन्दर्भे[3] अत्रि-अरुन्धती-कश्यप-गोतम-जमदग्नि-भरद्वाज-वसिष्ठ-विश्वामित्रशब्दानां दुर्बोध-निर्वचनेषु सा दुर्बोधता दृश्यते । एषां सम्यग्विवेचनं मयान्यत्र[4] कृतम् ।

(20) निरुक्तपरम्परामाश्रित्य इतिहासपुराणग्रन्थेष्वपि धातुजसिद्धान्तो-ऽवलम्बित: । धातवोऽत्र सामान्यार्थे, लक्ष्यार्थे, विकसितार्थे, परिवर्तितार्थे च प्रयुक्ता: । उपसर्गा अपि क्वचिद् भिन्नार्थेषु प्रयुक्ता: ।[5] समस्तपदानि विगृह्य निरुक्तानि, क्वचिच्च पृथक् पदान्यपि निरुक्तानि ।[6]

(21) एवमेवानेकत्र पदच्छेदै:[7] अपरत्रानेकधातुभि:[8] निर्वचनानि कृतानि । अथच निर्वचनप्रक्रियया पर्यायाणां[9] पर्यायैश्च निर्वचनानां[10] स्पष्टीकरणमपि कृतम् ।

(22) एवं प्रकृति-प्रत्ययाद्याश्रयान् निरुक्ति-वैविध्यादपि भाषाया: सम्पन्नता व्यज्यते । अनेकत्र भाषाया: निगूढरहस्यानि किंवा जीवनरहस्यान्यपि उद्घाटयन्ते ।

(23) निरुक्तव्याख्याकारदुर्गसिंहेन स्वनिर्वचनपरिभाषायां[11] संकेतिता प्रत्यक्षवृत्ति:=व्याकरण प्रक्रियया व्युत्पादनं, परोक्षवृत्ति:=अर्थानुकूलतया कयापि वृत्त्या निष्पादनं[12] अतिपरोक्षवृत्ति:=कस्याश्चिदपि वृत्त्या अभावे अक्षर-वर्ण-साम्यादपि

---

1. आनकदुन्दुभि–आस्तीक-इध्मवाह्-उद्दालक………………।
2. यथा—चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चमिरेव च ।
   हूयते च पुनर्द्वाभ्यां तस्मै होत्रात्मके नम: ।। महा. 12/75/1 pr.
   चि. शान्ति 47/43 नारदीय 1/19/35, वामन 26/1, अत्र–'आश्रावय', 'अस्तु श्रौषट्' 'यज' 'ये यजामहे' 'वषट्' इति समेकितै: सप्तदशभिरक्षरै: हूयते-इत्यनेन प्रकारेण महाभारते नीलकण्ठेन व्याख्या कृता ।
3. महा. 13/95; गी.प्रे. 93
4. रा.म.शा.वि.—अध्याय 5, पृ. 142-174
5. उपेन्द्र–उदक–प्रयागादिषु
6. अंगारपर्ण-तिलोत्तमा-दामोदरादिषु
7. अधोक्षज-हृषीकेश-गोविन्दादिषु
8. मित्र-शत्रु-अग्न्यादिषु
9. विष्णु-वासुदेवार्जुनादिषु
10. ब्रह्म-बृहस्पति-रुद्रादिषु
11. अपिहितार्थस्य परोक्षवृत्तौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनमिति ।
12. अग्नि-अप्सरा:–कन्याप्रभृतिषु

निष्पादनं,[1] प्रत्यक्षपरोक्षवृत्तिः=उभयविधवृत्तिभ्यां निष्पादनमिति[2] याः वृत्तयो संकेतिता ता इतिहासपुराणगतनिर्वचनेष्वपि दृश्यन्ते ।

(24) भाषाविज्ञानदृष्ट्या अत्र ध्वनिपरिवर्तनेषु वर्णागमः[3], वर्णविकारः[4], आदिमध्यस्वरलोपः[5], वर्णादेशश्च[6], अर्थपरिवर्तनेषु अर्थसंकोचः[7], अर्थविस्तारः[8] अर्थादेशश्च[9] दृश्यन्ते ।

(25) विवेच्यग्रन्थेषु एकाक्षरपरम्पराऽपि दृष्टिगता भवति, या खलु वैदिके तान्त्रिके च साहित्ये प्राचुर्यतः प्राप्यते । एतद्दृष्ट्या अधोक्षज-उमा-ओ३म्-गुरु-माधव-माया-प्रणव-राधा-राम-हरिप्रभृति शब्दाः द्रष्टव्याः ।

(26) यत्र तत्र मन्त्राणामेकाक्षरा व्याख्याऽपि स्वशैल्या विहिता । यथा वामनपुराणे 'ॐ नमः भगवते वासुदेवाय' इत्यस्य द्वादश पत्रकं योगं पितामहः सनत्कुमारं प्रोवाच । अत्र सर्वाण्यक्षराणि भगवत्कलेवरे सहैव च सर्वे मासाः राशयश्च तत्र प्रतिष्ठापिताः ।[10]

---

1. अत्रि-कश्यप-जमदग्निप्रभृतिषु
2. उर्वी-पृथ्वी-विष्णु-सरमाप्रभृतिषु
3. इक्ष्वाकुः
4. द्र.—अतिथिः
5. गालव—बीभत्सु—वृषल—गरुड—शान्तनु प्रभृतयः शब्दाः द्रष्टव्याः
6. उर्वशी—गोतम—वसिष्ठादयः
7. अनंग—त्रिपथगा—पादप—हनुमान्प्रभृतिशब्दाः यौगिकार्थं परित्यज्य रूढित्वेन प्रसिद्धाः ।
8. बहु—सन्तानक्षमा 'जाया' सामान्यतः पत्नीत्वेन, क्षरणरहितः 'अक्षरः' ब्रह्मत्वेन ख्यातः ।
9. देववाची 'असुरः' राक्षसत्वेन प्रयुज्यते । दैत्य-राक्षस-वृषलप्रभृतिशब्दाः निर्वचनपरकं मूलार्थं परित्यज्य गृह्यन्ते ।
10. शिखासंस्थस्तु ओंकारो मेषोऽस्य शिरसि स्थितः ।
    पत्रं वैशाखमासे हि प्रथमं परिकीर्तितम् ।।
    नकारो मुखसंस्थोऽपि वृषस्तत्र प्रकीर्तितः ।
    ज्येष्ठमासश्च तत्पत्रं द्वितीयं परिकीर्तितम् ।।
    मोकारो भुजयोर्युग्मं मिथुनस्तत्र संस्थितः ।
    आषाढ इति विख्यातस्तृतीयं पत्रकं स्मृतम् ।।
    भकारं नेत्रयुगलं तत्र कर्कटकः स्थितः ।
    मासश्रावण इत्युक्तश्चतुर्थं पत्रकं स्मृतम् ।।
    गकारं हृदयं प्रोक्तं सिंहो वसति तत्र च ।
    मासो भाद्रपदः प्रोक्तः पञ्चमं परिगीयते ।।
    भकारं कवचं विद्यात्कृत्या तत्र प्रतिष्ठिता ।
    मासश्चाश्वियुजि प्रोक्तः षष्ठं तत्पत्रकं स्मृतम् ।।

(27) परोक्षवृत्त्याश्रितानि लोककृतनिर्वचनानि (Folk or Popular Etymologies) कैश्चिद् भ्रामकानीति उपेक्ष्यन्ते, परमत्र लोकदृष्टिः, लोकभावना, लेखकीया दृष्टिश्च संवलिताः भवन्तीति बोध्यम् । आस्तीक-निषाद–मेदिनी-कुश-जातवेदाः-कुलपतिप्रभृत्यनेके शब्दाः लोककृतनिर्वचनत्वेन प्रकृतग्रन्थेषु दृष्टिपथमायान्ति ।

(28) इक्ष्वाकु-और्व-मान्धातृ–रुद्रादिशब्द–निरुक्ति-सन्दर्भे डॉ. सत्यव्रतस्य 'निरुक्त्याभास' शब्दस्य कल्पना एतेषां कृते न समीचीना ।[1] वस्तुतः आर्थीनिरुक्ति–निदर्शनभूताः एतादृशाः शब्दाः ।

(29) कुत्रचित् क्रियापदान्यपि निर्वचनरूपेण व्याख्यातानि । यथा 'अशुश्रूषाभ्युपेत्य' 'धीमहि' चोदयादिति अग्निपुराणे ।[2]

(30) गम्भीरविषयाणां सुस्पष्टतायै गृहीतेषूपायेषु निरुक्तिरन्यतमा । शब्द-विशेषेष्वनुस्यूता भावनाः धातूपसर्गप्रत्ययादिभिः कथं सम्बद्धाः इत्येताभिः निरुक्तिभिः ज्ञायते । अनेकत्र निरुक्तिकर्तुः चिन्तनप्रकारोऽपि लक्ष्यते ।

उपरिलिखितविवेचनेन विशदीभवति यदितिहासपुराणग्रन्थेषु निर्वचन–प्रयोगः परम्परामावहन्नपि स्वविशिष्टशैल्यां कृतः । अत्र आर्थीनिरुक्तीनां प्राधान्यं, परं यत्र तत्र शाब्दीनिरुक्तीनां स्वरूपमपि दृश्यते । यथा निर्दिष्टम् आर्थनिर्वचनेषु मतवैभिन्न्यं प्रकृत्यैव जायते । यथा भर्तृहरिणा लिखितम् 'अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु'[3], यत्खलु यास्केन[4] पाणिनिनाऽपि[5] पूर्ववर्तिविचारकाणां मतानि

---

तेकारं मनसि प्रोक्तं तुला तत्र च संस्थिता ।
मासश्च कार्तिको नाम सप्तमं पत्रकं स्मृतम् ।।
वाकारं नाभिसंयुक्तं स्थितस्तत्र तु वृश्चिकः ।
मासो मार्गशिरा नाम त्वष्टकं पत्रकं मुने ।।
सुकारं जघनं प्रोक्तं तत्रस्थश्च धनुर्धरः ।
पौषो निगदितो मासो नवमं परिकीर्तितम् ।।
देकारश्चाङ्घ्रियुगले तत्रस्थस्तिमिरुच्यते ।
मासो माघेति विख्यातो दशमं पत्रकं स्मृतम् ।।
वाकारो जानुयुग्मं च कुम्भस्तत्रादिसंस्थितः ।
पत्रकं फाल्गुनः प्रोक्तं तदेकादशमुत्तमम् ।।
पादौ यकारौ मीनोऽपि स चैत्रे वसते मुने ।
इदं तु द्वादशं प्रोक्तं पत्रं वै केशवस्य हि ।। —वामन 61/54–65

2. ऋतम्—पृ. 238
3. अ.पु. 253/17; 216/12,13
4. वाक्य 2/171
5. नि. 2/2
6. पा. 4/1/17. 157; 8/3/104

प्रदर्श्य स्वीकृतम् । संस्कृता भाषा नियमबद्धा, तथापि निर्वचनेषु ध्वनि-अर्थ-परिवर्तनानि प्रचुरतः दृश्यन्ते । एतत्सम्बद्धाः अन्या अपि दृष्टयः प्रदर्शयितुं शक्यन्ते, परं तत्सर्वं पृथगध्ययनविषयः ।

**नामकरणम्**

यथोपरि निर्दिष्टं यदितिहासपुराणग्रंथेषु व्यक्तिवाचकनाम्नां पर्याप्ता संख्या वर्तते । विशेषतस्तु चरितनायकानां महर्षीणां परिचय-कृत्य-सन्दर्भेषु, नामजिज्ञासासु, विविधदेवीदेवतानां स्तोत्रेषु, सहस्रनामसु अनेकानि नामानि प्राप्यन्ते । नाम्नामध्ययनं भाषाविज्ञानान्तर्गतनामविज्ञाने (Onomatology or Onomestics) क्रियते । पुराऽपि भारतीयमनीषिभिः षोडशसंस्कारेषु तथा यत्र तत्र साहित्येऽपि नाम-विचारः कृतः ।[1] महर्षिणा मनुना तूद्घोषितम्—

सर्वेषां यानि नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।[2]

पुत्रादीनामीश्वरपरकानि नामानि तु भगवन्नामानुस्मरणार्थमेव । यथा पूर्णप्रज्ञदर्शनस्य प्रवर्तकः माधवाचार्यः स्वीकरोति—'नामकरणं पुत्रादीनां केशवादिनाम्ना व्यवहारः सर्वदा तन्नामानुस्मरणार्थम् ।[3]

नामानि तु प्रायः गुणशः कर्मशो वा प्रदत्तानि भवन्ति[4], परं सूक्ष्मदृष्टया तानि तु घटना-पदार्थ-व्यापार-रूप-कामनादीनि आश्रित्य सहेतुकान्यपि भवन्ति[5] । यदृच्छानामसु नामकर्तुः मनःस्थितेश्च योगदानं भवति । एतद् दृष्टया बृहद्देवतायां शौनकेन प्राचीननैरुक्तैश्च विचारः कृतः ।[6] इतिहासपुराण गतनामनिर्वचनेषु विविधा आधाराः दृश्यन्ते । यथाहि दैविकनामसु आनुवंशिक-जन्मसम्बधि-कृपाकामनाशीर्वादात्मक-वर्ण–रूपाकृतिपरक–-गुणपरक–कर्मपरक–आख्यानपरक–-वाग्शब्दानुकृतिपरक–उपवसनपरक-मङ्गलात्मक-निवासात्मकादयः प्रमुखाः । भौतिकनामसु विशिष्टव्यक्तिहेतुक–उत्पत्तिहेतुक–आख्यानहेतुक–अन्वर्थकादयः मुख्याः । रामायणं महाभारतञ्चाधिकृत्य मयान्यत्र एतेषु सोदाहरणं विवेचनं कृतम् ।[7]

---

1. आ. गृ. 1/15/4–10, आप. 1/5/8–11; बौ. गृ. 2/1/23–31; वैखा. 3/19, मनु 2/30–33, ऋक् 10/71/1; छा.उप. 6/3/3
2. मनु. 1/21–तु–नि. 1/20
3. सर्वदर्शनसंग्रहः—पृ. 265
4. गौणानि तत्र नामानि कर्मजानि कानिचित्–महा.
5. नि 1/2
6. बृ. 1/25–33
7. रा.म.शा.वि.–अध्याय–2

**निर्वचनकोषः—**

निर्वचनक्षेत्रेऽस्मिन् कोषनिर्मातॄणामप्युपेक्षाभावो दृष्टः। न निर्वचनात्मक-शब्दानां कोषाः निर्मिताः, नापि कोषेषु निर्वचनानां सम्यग् उपयोगः कृतः। मम तु स्पष्टं मतमेतद् यद्येवमकरिष्यन् नाम, तर्हि नूनं शब्दानां स्पष्टीकरणमत्यधिकं सुकरमभविष्यत्। इमामेवावश्यकतामनुभूय अत्र देव-देवयोनि-मानव-स्थल-जल-सृष्टि-तीर्थ-वनस्पति-जन्तु-अन्तरिक्ष-पुराण-साहित्य-काव्यशास्त्र-धर्म-दर्शन-व्यवहार-ज्योतिषा-दिभिः सम्बद्धः अकारादिक्रमिकशब्दैः ससन्दर्भैः[1] तन्निर्वचनैश्च युक्तः इतिहासपुराणा-श्रितो[2] "निर्वचनकोषः" प्रस्तूयते।

आशासे कोषोऽयं कोष-भाषाशास्त्र–धर्म-विज्ञान–इतिहास–संस्कृति-पुरातत्त्व–समाजशास्त्रादिक्षेत्रेषु अध्येतॄणामनुसन्धित्सूनाञ्च कृते सन्दर्भग्रन्थ–रूपेणोपादेयो भविष्यतीति शम्।

———

1. द्र.—सन्दर्भ-संक्षेपः।
2. रामायणम्—खिलपर्वात्मकहरिवंशसहितं महाभारतं पुराणानि च।

# इतिहास-पुराण-निर्वचनकोषः[1]

| शब्दाः | निर्वचनानि | सन्दर्भाः | स्थलनिर्देशः |
|---|---|---|---|
| 1 | 2 | 3 | 4 |
| अंशुः | अशू व्याप्तावयं धातुः प्रियश्चाप्यनुरागतः । सूर्यो व्याप्तं जगद्यस्मात्तस्मादंशुः स उच्यते ॥ | साम्ब. पु. 8.36 | — — |
| अकम्पनः* | नहि कम्पयितुं शक्यः सुरैरपि महामृधे । अकम्पनस्ततस्तेषामादित्य इव तेजसा ॥ | वा.रा.युद्ध 55.8 | 4 11 |
| अक्षरः* | 1 तदक्षरं न क्षरतीति विद्धि । | महा.12.195.24 | |
| | 2 एतदक्षरमित्युक्तम् । | 12.291.35 | |
| | 3 एकत्वमक्षरं प्राहुः । | 12.293.47 | 3 1 |
| | 4 न क्षीयते न क्षरति विद्यते न कदाचन । | लि.पु.पू. 88.25 | |
| | 5 न क्षरतीति लोकानि ऋतमक्षरमुच्यते । सत्यमक्षरमित्युक्तं प्रणवादि-नमोऽन्तकम् ॥ | लि.पु उ. 22.8 | |
| | 6 न क्षरतीति लोकेऽस्मिंस्ततो ह्यक्षर-मुच्यते । | तत्रैव 23.20 | |
| | 7 न क्षीयते न क्षरसे कल्पकोटिशतैरपि । तस्मात्त्वमक्षरत्वाच्च विष्णुरित्येव कीर्त्यते ॥ | म.पु. 248.39 | |
| | 8 न क्षीयते न क्षरति विकारप्रसृतन्तु तत् । अक्षरं तेन चाप्युक्तमक्षीणत्वा-त्तथैव च ॥ | वा.पु.उ. 40.115 | |

1 पुष्पाङ्कितशब्दानां निर्वचन-विवेचनं 'देवनागर प्रकाशन, जयपुरतः प्रकाशिते 'रामायण एवं महाभारत का शाब्दिक विवेचन' नाम्नि मम ग्रन्थे द्रष्टव्यम् । स्थलनिर्देशोऽन्तिमे स्तम्भेऽध्याय—पदसंख्यां प्रदायात्र कृतः ।

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 9 क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते । | (श.क.) | | |
| अक्षरी | अथोङ्कारमयो योगी न क्षरेत्त्वक्षरी भवेत् । | वा.पु.पू 19.40; 20.4 | – | – |
| अग्निः* | 1 यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया । तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिभिः । | महा. आश्व अपे. 14.2563-64 | 3 | 2 |
| | 2 यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते । आहुतिः— — — | तत्रैव 2566 | | |
| | 3 दीप्यमानाय तस्मादग्नीति कीर्त्यते । | तत्रैव 2566 | | |
| | 4 यस्माच्च नयति ह्यग्र्यां गतिं विद्वान् सुपूजितः । तस्माच्च नयनाद्राजन् वेदेष्वग्नीति कीर्त्यते ॥ | तत्रैव 2568 | | |
| | 5 ह्यग्रजोऽग्निरिति स्मृतः । | लि.पु. 70.105 वा.पु.पू. 5.40 | | |
| अग्निहोत्र | 1 अग्नीनामथवाऽग्नेस्तु यस्य होमः प्रदीयते । इष्टो भवति सर्वाग्नेरग्निहोत्रं च तद् भवेत् ॥ | महा. आश्व अपे. 2622-23 | | |
| | 2 तस्माद् वै त्रायते दुःखाद् यजमानं हुतोऽनलः । तस्मात्तु विधिवत् प्रोक्तमग्निहोत्रमिति श्रुतौ ॥ | तत्रैव 2527-28 | – | – |
| अग्नीषोमौ | इषुश्चाप्यभवद् विष्णुर्ज्वलनः सोम एव च । अग्नीषोमौ जगत् कृत्स्नम्……॥ | महा. 8.24.84 | – | – |
| अघ्न्या | 1 अघ्न्या इति गवां नाम क एता हन्तुमर्हति ।महच्चकाराकुशलं वृषं गां वालभेत्तु यः ॥ | महा. चि. शान्ति 262.47 | | |
| | 2 अघ्न्या इति गवां नाम श्रुतौ ताः पीडयेत्कथम् । | स्कन्द कुमारिका 45.28 | – | – |
| अङ्गः | स चांगविषयः श्रीमान् यत्रांगं स मुमोच ह । | वा.रा.बाल. 23 14 | – | – |
| अङ्गाः | 1 अङ्ग-बङ्ग-कलिङ्गाद्याः ब्रह्मपुण्ड्रान्ध्रसंज्ञिताः । जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकांश्च ते ॥ | भा पु. 23.5,6 | – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 2 यस्य (बलेः) क्षेत्रे दीर्घतमसाङ्ग-वङ्ग-कलिङ्गसुह्मपौण्ड्राख्यं बालेयक्षत्रियमजन्यत । तन्नामसन्ततिसंज्ञाश्च पञ्चविषया बभूवुः ॥ | वि. पु. 4.18.12,13 | | |
| अङ्गदः | यथा पुत्रं गुणश्रेष्ठमंगदं कनकांगदम् । | वा.रा.कि.18.51 तु-वा.रा.युद्ध 41.76 | – | – |
| अङ्गदीया | अंगदीया पुरी रम्या ह्यङ्गदस्य निवेशिता । | वा.रा. उत्तर 102.8 तु. तत्रैव 26.187 | – | – |
| अङ्गारपर्णः❀ | अंगारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् । ····अंगारपर्णमिति च ख्यातं वनमिदं मम । | महा. 1.18.12 | 4 | 7 |
| अङ्गिराः❀ | 1 अंगारेभ्योऽगिराऽभवत् । | महा. 13.85.15; गी.प्रे. अनु. 85.105 तु.– तत्रैव 85.107 | 5 | 1 |
| | 2 प्रधानाङ्गं मुखं धातुस्ततो जातश्च बालकः । इरस्तेजस्विवचनोऽप्यङ्गिराः तेन कीर्तितः । | ब्र.वै.ब्र.ख. 22.8 | | |
| | 3 द्वितीयं तु ततः शुक्रमङ्गारेष्वपतत्प्रभुः । अङ्गारेष्वङ्गिरोऽङ्गानि संहितानि ततोऽङ्गिराः । | वा. पु. उ. 4.40 | | |
| अचलः | 1 स्कन्नाचलत्वादचलाः । | वा.पु.पू. 6.30 | | |
| | 2 तदाचलत्वादचला. । | लि.पु. 70.135 | | |
| | 3 न स्वरूपान्न सामर्थ्यात् ज्ञानादिकाद् गुणात् । चलनं विद्यते यस्येत्यचलः कीर्तितोऽच्युतः ॥ | (श.क.) | | |
| अचला | 1 त्वं शेष सम्यक् चलिता यथावत् संगृह्य तिष्ठस्व यथाचला स्यात् । | महा.1.32.19 | – | – |
| | 2 अचला स्थितिरूपतः । | ब्र.वै.-ब्र.ख.9.30 | | |
| अच्युतः❀ | 1 तस्मान्नच्युतपूर्वोऽहमच्युतस्तेन कर्मणा । | महा. 12.330.16 | 3 | 3 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु । यस्मान्न च्यवसे स्थानात्तस्मात्संकीर्त्यतेऽच्युतः । | म. पु. 248.35 | — — |
| अजः❀ | 1 न जायते जनित्र्यां यदजः । | महा. 5.68.8 | — — |
| | 2 न हि जातो न जायेऽहं न जनिष्ये कदाचन ।''''तस्मादहमजः स्मृतः । | महा.12.330.9 | 3 4 |
| | 3 अजातत्वादजः स्मृतः । | लि.पु. 70.100 कू.पु.पू. 4.59 | |
| अणीमाण्डव्यः | स तथाऽन्तर्गतेनैव शूलेन व्यचरन्मुनिः । ....अणीमाण्डव्य इति च ततो लोकेषु कथ्यते ।। | तत्रैव 1.101.21 | — — |
| अणुहः | अणुवर्मरतिर्नित्यमणु सोऽध्यगमत् पदम् । | हरि. 1.23.5 | — — |
| अतिथिः❀ | 1 अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते । | महा.13.100.18 गी.प्रे.अनु.97.19; मा.पु. 29.31 | 7 1 |
| | 2 ह्यज्ञातोऽतिथिरुच्यते । | महा. आश्व. अपे. 1.4.956 | |
| अत्रिः❀ | 1 अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि । | महा गी.प्रे. अनु.85.108 | |
| | 2 अरात्रिरत्रिः सा रात्रिः यां नाधीते त्रिरद्य वै । अरात्रिरत्रिरित्येव । | महा.13.95.25, गी.प्रे.अनु.93.82 | 5 2 |
| | 3 अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्यते । | वा.पु.उ.4.45 | |
| | 4 अहं तृतीय इत्यत्रिस्तस्मादत्रिः स कीर्त्यते । | ब्रह्म. 2.1.44 | |
| | 5 त्रिगुणायां प्रकृत्यां त्रिर्विष्णावश्च प्रवर्तते । तयोर्भक्तिं समायास्य तेन बालोऽत्रिरुच्यते ।। | ब्र.वै.ब्र.ख. 22.16 | |
| अथर्वाङ्गिरसः | 1 अथर्वांगिरसं नाम अस्मिन् वेदे भविष्यति ।। | महा.5.18.7 | — — |
| | 2 अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती । | भा.पु.6.6.19 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| अद्भुतोपमा | त्रैलोक्यासम्भावि किमप्यारोप्यं प्रतियोगिनि । कविनोपमीयते या प्राप्यते साऽद्भुतोपमा ।। | अ.पु.344.16 | |
| अधर्मः | अवारणेऽमहत्त्वे च अधर्म इति चोच्यते । | लि.पु.पू.10.13<br>वा पु.59.28 | |
| अधिवासनं | हरेः सान्निध्यकरणमधिवासनमुच्यते । | अ.पु.59 1 | – – |
| अधोक्षजः❀ | 1 अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः । | महा.5.68.17 | 3 5 |
| | 2 पृथिवीनभसी चोभे विश्रुते विश्वलौकिके । तयोः संधारणार्थं हि मामधोक्षजमञ्जसा ।। | महा.<br>12.330.17 | |
| | 3 शब्द एकपदै (एकमतै) रेष व्याहृतः परमर्षिभिः । नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् ।। | महा.12.342.85 | |
| अनङ्गः | 1 अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह । अनङ्ग इति विख्यातः ।। | वा.रा.बाल.<br>23.14 | – – |
| | 2 हरकोपानलदग्धस्त्वं तेनानङ्ग इहोच्यते । | हरि.<br>2.106.46 | |
| | 3 भवितेति च कामोऽयं कालात्कान्तोऽचिरादपि । अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति ।। | म पु.<br>154.272 | |
| अनन्तः | 1 नास्यान्तमधिगच्छन्ति ततोनन्त इति श्रुतिः । | हरि.<br>3.34.42 | – – |
| | 2 तदा गौणमनन्तस्य नामानन्तेति विश्रुतम् । नामधेयानुरूपस्य मानसस्य महात्मनः ।। | महा.<br>12.176.32 | |
| | 3 शाश्वतत्वादनन्तः | महा.5.68.13 | |
| | 4 नैव चान्तं कदाचिद् विदन्ते ...अनन्त । | महा.<br>12.330.13 | |
| | 5 नास्त्यन्तो यस्य वेदेषु पुराणेषु चतुर्षु च । शास्त्रेष्वन्येषु योगेषु तेनानन्तं विदुर्बुधाः ।। | ब्र.वै.-कृ ख.<br>11.25 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 6 नास्त्यन्तोऽस्यैव वेदेषु तेनानन्त इति स्मृतः । | ब्र.वै.कृ.ख. 13.81 | |
| | 7 यस्माद्ब्रह्मादयो देवा मुनयश्चोग्रतेजसः । न तेऽन्तं त्वधिगच्छन्ति तेनानन्तस्त्वमुच्यसे ।। | म.पु.248.38 | |
| | 8 अनन्ताऽनन्तरूपतः । | ब्र.वै.प्र.ख.9.32 | |
| अनाद्यः | न चापि—·······कदाचिद् विदन्ते अनाद्यो··········प्रगीतः । | महा. 12.330.25 | – – |
| अनिरुद्धः | 1 यस्मात् सर्वं प्रभवति जगत्स्थावरजङ्गमम् । सोऽनिरुद्धः····—। | महा. 12.326.37 | – – |
| | 2 निरोद्धा विद्यते यस्मान्न ते भूतेषु कश्चन । अनिरुद्धस्ततः प्रोक्तः पूर्वमेव महर्षिभिः ।। | म.पु. 248.49 | |
| | 3 तस्यामस्याभवत्पुत्रो महाबलपराक्रमः । अनिरुद्धो रणेऽरुद्धवीर्योदधिररिन्दमः ।। | अ.पु. 5.28.7 | |
| | 4 अनिरुद्धो रणेऽरुद्धः । | वि.पु.5.32.7, म.पु.47.23 | |
| | 5 गम्भीररयोऽनिरुद्धो वर्धते भगवानुत । | भा.पु. 1.14.30 | |
| | 6 अनिरुद्धोऽप्रतिरथः | भा.पु.10.89.31 | |
| | 7 तस्मात्सुतोऽनिरुद्धोऽभून्नानायुतबलान्वितः । | भा.पु. 10.90.36 | |
| अनुभावः | आलम्बन-विभावस्य भावैरुद्बुद्धसंस्कृतैः । मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः ।। आरम्भ एव विदुषामनुभाव इति स्मृतः । स चानुभूतये चात्र भवत्युत निरुच्यते ।। | अ.पु.339.44–45 | – – |
| अनुमतिः | पूर्णेन्दोः पूर्णपक्षे तु रात्रिसन्धिषु पूर्णिमा । यस्मात्तामनुपश्यन्ति पितरो दैवतैः सह । तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ।। | वा.पु.पू. 56.38 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| अनेकांशा | एकानंशात्तु यस्मात्त्वमनेकांशा भविष्यसि । | वा पु पू. 25.49 | – | – |
| अन्तकः | सर्वेषामेव भूतानां यस्मादन्तको महान् । तस्मात्त्वमन्तकः प्रोक्तः सर्वदेवैः महाद्युते ।। | म.पु. 213.6 | – | – |
| अन्तर्धिः | अन्तर्धानाद् व्यजायत । | वि.पु.1.14.1 | – | – |
| अपर्णा | ह्यपर्णा तु अनिकेता तपोऽधात् । | वा.पु.उ.11.8 | – | – |
| अपानः | 1 गच्छत्यपानोऽवाक्चैव | तत्रैव12.177.24 | – | – |
| | 2 वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते । | महा. 12.178.6 | – | – |
| | 3 अधोनयत्यपानस्तु आहारञ्च नृणामधः । मूत्रशुक्रवहो वायुरपानस्तेन कीर्तितः ।। | अ.पु. 214.9 | | |
| | 4 अपानयत्यपानस्तु आहारादीन् क्रमेण च । | लि.पु.पू. 8.63 | – | – |
| अपान्तरतमा | अपान्तरतमे देशे तपस्तेपेऽत्र जन्मनि । अपान्तरतमा नाम शिशोस्तेन प्रकीर्तितम् ।। | ब्र.वै.ब्र.ख. 22.18 | – | – |
| अप्रतिबुद्धः | बुध्यमानो भवत्येष संगात्मक इति श्रुतिः । अनेनाप्रतिबुद्धेति वदन्ति ···अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ।। | महा. 296.512 | – | – |
| अप्सराः❀ | अप्सु निर्मथनादेव रसात्तस्माद्वराः स्त्रियः । उत्पेतुः···तस्मादप्सरसोऽभवन् ।। | वा.रा.बाल. 45.32 | 4 | 1 |
| अब्जः (धन्वतरिः) | अब्जस्त्वमिति होवाच तस्मादब्जस्तु सः स्मृतः । | हरि. 1.29.14 | – | – |
| अभिनयः | अभिमुख्यं नयन्नर्थान् विज्ञेयोऽभिनयो बुधैः । | अ.पु. 342.1 | – | – |
| अभिमन्युः❀ | अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् । अभिमन्युमिति प्राहुः··· | महा. 1.213.60 | 6 | 1 |
| अभ्यागतः | अभ्यागतोऽज्ञातपूर्वः । | महा. आश्व अपे. 1.4.956 | – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| अभ्रं | 1 न भ्रश्यन्ति यतस्त्वापस्तदभ्रं कवयो विदुः । | वा. पु. पू. 51.27 | | |
| | 2 न भ्रश्यन्ति यतोऽभ्राणि । | लि.पु.पू.55.46 | – | – |
| अमावास्या | 1 अमा वसेतामृक्षे तु यदा चन्द्र-दिवाकरौ । एकां पञ्चदशीं रात्रि-ममावास्या प्रकीर्तितः' ॥ | वा. पु. पू. 56.40 | | |
| | 2 कलाद्वयाविष्टस्तु प्रविष्टः सूर्य-मण्डलम् । अमाख्यरश्मौ वसति अमावास्या ततः स्मृतः ॥ | वि.पु. 2.12.8 | – | – |
| अमृतभोजनः (देवः) | सम्पूर्णमर्द्धमासेन तं सोममममृता-त्मकम् । पिबन्ति देवता विप्रा यतस्ते-ऽमृतभोजनाः ॥ | कू.पु.पू. 43.37 | | |
| अम्बा❀ (अम्बिका) | 1 अङ्गानां वर्धनादम्वा । | महा.12.258.30 | 7 | 2 |
| | 2 अम्वेति मातृवचनो वन्दने पूजने तथा । पूजिता वन्दिता माता जगतां तेन साम्बिका ॥ | ब्र.वै.प्र.ख. 57.20 | – | – |
| अम्भः | 1 भान्ति यस्मात्ततोऽभाँसि शब्दो ऽयं सुमनीषिभिः । भातिर्दीप्तौ निगदितः पुनश्चाथ प्रजापतिः ॥ | लि.पु.70.221 | – | – |
| | 2 भान्ति यस्मात्ततो भासि भा शब्दोऽयं मनीषिभिः । व्याप्ति-र्दीप्त्यां निगदितः पुनश्चाह प्रजापतिः ॥ | वा.पु.पू. 9.23 | | |
| | 3 आभाति यस्मात्ताभान्ति भासन्तो व्याप्तिदीप्तिषु । सर्वतः समनु-प्लाव्य तासाञ्चाम्मो विभाव्यते'॥ | वा.पु पू. 7.50 | | |
| | 4 आभान्ति यस्मात्ता भाभिर्भा शब्दः व्याप्तिदीप्तिषु । भस्म सर्व-मनुप्राप्य तस्मादम्भो निरुच्यते ॥ | वा.पु.उ. 38.182 | | |
| अयुताक्षः | —···अयुताक्षो ना सर्वतोऽक्षिमयोऽपि वा —नास्त्यन्तोऽथास्य चक्षुषाम् । | महा. गी प्रे.अनु. 161.13 | – | – |
| अयोध्या❀ | 1 सा····सत्यनामा प्रकाशते । | वा.रा.बाल. 6.26 | 8 | 1 |
| | 2 अयोध्यायामयोध्यायाम् ·· — | हरि. 1 54.26 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 3 देवानामप्ययोध्याऽस्ति त्वयोध्या नामतःपुरी । | विष्णुधर्मोत्तर 1.13.1 | | |
| अरिष्टः❀ | अरिष्टो नाम हि गवामरिष्टो दारुणाकृतिः । | हरि. 2.21.7 | 4 | 12 |
| अरुन्धती❀ | धरान् धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम् । मनोऽनुरुन्धती भर्तुरिति मां विद्धयरुन्धतीम् । | महा. अनु. 93.96 | 5 | 3 |
| अर्कः | देवैरभ्यर्चितो यस्मात्तस्मादर्कः स उच्यते । | साम्ब. पु. 8.26 | — | — |
| अर्चिष्मती | पश्यत्यर्चिष्मती भाभिः········ | महा. 3.288.6 | — | — |
| अर्जुनः❀ | पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः । करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः ॥ | तत्रैव 4.39.18 | 6 | 2 |
| अर्णवः | आगतागतिकं तद्वै यदा तु सलिलं वहु । सञ्छाद्य मां स्थितां भूमिमर्णवाख्या तदा च सा ॥ | वा. पु. पू. 7.49 | – | – |
| अर्थालङ्कारः | अलङ्करणमर्थानामर्थालङ्कार इष्यते । | अ. पु. 344.1 | – | – |
| अर्यमा | अचि (मि) प्रत्ययपूर्वस्य ऋधातोर्य निपात्यते । गतो यस्मात्परो नास्ति तेन सूर्योऽर्यमा स्मृतः ॥ | साम्ब. पु. 8.28 | – | – |
| अर्वाक्स्रोतः | 1 (प्रादुर्बभौ) प्रादुरासीत्तदाव्यक्तादर्वाक्स्रोतस्तु साधकः । यस्मादर्वाक् व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ॥ | मा. पु. 47.25 लि. पु. 70.153 | | |
| | 2 प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतस्तु साधकम् । यस्मादर्वाक् व्यवर्तते ततोऽर्वाक्स्रोत उच्यते ॥ | वा. पु. मू. 6.49 | – | – |
| अलङ्कारः | काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते । | अ. पु. 342.17 | – | – |
| अवन्ती | अश्ववन्तीमवन्तीम् । | वा.रा.कि. 41.10 | – | – |
| अविमुक्तं | अविशब्देन पापस्तु वेदोक्तः कथ्यते द्विजैः । तेन मुक्तं मया जुष्टमविमुक्तमतोच्यते ॥ | लि. पु. पू. 92.143 | – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| अविशेषः | अविशेषवाचकत्वादविशेषास्ततस्तु ते । अशान्तघोरमूढत्वादविशेषास्ततः पुनः । | लि. पु. 70.37, वा.पु. पू. 4.52 | – | – |
| अवीक्षितः | अवेक्षतेति यत्प्रोक्तं भवद्भिर्बहुशो वचः । अवीक्षितेति तेनाऽस्य ख्यातं नाम भविष्यति ॥ | मा. पु. 122.12 | – | – |
| अशुश्रूषा-भ्युपेत्य | अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद् विवाद-पदमुच्यते ॥ | अ. पु. 253.17 | – | – |
| अश्मकः | 1 ततोऽपि द्वादशे वर्षे स जज्ञे पुरुषर्षभ । अश्मको नाम राजर्षिः | महा. 1.168.25 | — | — |
| | 2 सा वै सप्त समाः गर्भमबिभ्रन्त व्यजायत । जघ्नेऽश्मनोदरं तस्या सोऽश्मकस्तेन कथ्यते ॥ | भा. पु. 9.9.37 | | |
| | 3 यदा च सप्तवर्षाण्यसौ गर्भो न जज्ञे, ततस्तं गर्भमश्मना सा देवी जघान । पुत्रश्चाजायत । तस्य चाश्मक इत्येव नामाभवत् ॥ | वि. पु. 4.4.70, 72 | | |
| अश्वतीर्थ | 1 अदूरे कान्यकुब्जस्य गंगायास्तीर-मुत्तमम् । अश्वतीर्थं तदद्यापि···· | महा. गी.प्रे. अनु. 4.17 | – | – |
| | 2 अश्वतीर्थमिति ख्यातं सिद्धावासं सुशोभनम् । आस्ते ह्यशिराः नित्यं तत्र नारायणः स्वयम् ॥ | कू. पु. उ. 53.38 | | |
| अश्वत्थामा | अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ॥ | महा. 1.12114 तु.महा. 7.167. 29-30 | – | – |
| अश्वशकृत् (नदी) | अश्वोष्ट्रशकृतां राशेर्निःसृतेति जनाधिप । ततोऽश्वशकृत् । | हरि. 2.57.24 | – | – |
| अश्विनौ (अश्विनीकुमारौ) | 1 अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसम्मितौ । | महा. गी.प्रे. अनु. 85.109 | 3 | 6 |
| | द्र.–नासत्य-दस्रौ (अश्विनौ) | हरि. 1.9.55 | | |
| | 2 वाजिरूपधरः सोऽथ तस्यां देवावथाश्विनौ । जनयामास···· | वि. पु. 3.2.7 | | |



| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 3 नासापुटाभ्यामुत्सृष्टं परोऽयमिति शङ्कया । तद्रे तसस्ततो जाता-वश्विनाविति निश्चितम् । दस्रौ सुतत्वात्संजातौ नासत्यौ नासिकाग्रतः ।। | म. पु. 11.36 | | |
| | 4 नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति·····। | वा.पु. उ. 22.78 द्र.—नासत्यः | | |
| अष्टाङ्गः | राजा सपुरुषः सभ्याः शास्त्रं गणक-लेखकौ । हिरण्यरुदकमग्निमष्टाङ्गः समुदाहृतः ।। | अ. पु. 252.8 | – | – |
| अष्टावक्रः | तस्माद् वक्रो भविता ह्यष्टकृत्वः स वै तथा । वक्र एवाभ्यजायदष्टावक्रः प्रथितो वै महर्षिः ।। | महा. 3.132.9½ | – | – |
| असत्यं | असत्यं तद्विपर्ययम् । अयथार्थकथनं सर्वलोकसुखप्रदम् । | पद्म.पु. क्रियायोगसार 17.85 | | |
| असुरः❀ | 1 दितेः पुत्रा न तां (वारुणीं=सुरां) राम जगृहुर्वरुणात्मजाम् । असुरास्तेन दैतेयाः—— | वा. रा. बाल. 45.36, वा.रा. | 4 | 13 |
| | 2 अप्रतिग्रहणात्तस्याः (सुरायाः) दैतेयाश्चासुरास्तथा ।। | बम्बई संस्करण-सं.इ.डि. से उद्धृत | | |
| | 3 ततोऽस्य जघनात्पूर्वमसुराः जज्ञिरे सुताः । असुः प्राणः स्मृतो विप्रै-स्तज्जन्मानस्ततोऽसुराः । | लि. पु. 70.99; वा. पु. पू. 9.4 | | |
| | 4 तन्वा यदसुरान् रात्री जघनादसृ-जत्प्रभुः । प्राणेभ्यो रात्रिजन्मानो ह्यसह्या निशि तेन ते ।। | वा. पु. पू. 9.21 | | |
| | 5 युक्तात्मानस्तमो मात्रा ह्युद्रिक्ता-भूत्प्रजापतेः । सिसृक्षोर्जघनात्पूर्व-मसुराः जज्ञिरे ततः । | वि. पु. 1.5.31 | | |
| | 6 इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् (मनुम्) । दृष्ट्वाऽसुराः यातुधानाः जग्धुमभ्यद्रवत् क्षुधा ।। | भा. पु. 8.1.17 तु.—वा.पु.पू.31.11; ब्र. पु. 3.71.263 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| अस्तः | यत्र प्रणाशमायाति तेषामस्तः स उच्यते । | वा. पु. पू. 50.107 | – | – |
| अस्वामिविक्रयः (व्यवहारः) | निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वा-प्रहृत्य वा । विक्रीयते परोक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥ | अ. पु. 235.19 | – | – |
| अहल्या | हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् । यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता ॥ | वा.रा. उत्तर 30.24 | 5 | 4 |
| अहिः | हीनत्वादहयः स्मृताः । | लि.पु. 70.23, वा.पु. पू.9.31, मा.पु.48.22, वि.पु. 1.5.45 | – | – |
| अहिंसा | न हिंस्यात् सर्वभूतानि मैत्रायणगतश्चरेत् । | महा. चि. वन 212.34 | – | – |
| आग्नेयः | 1 पुराणमग्निना गीतमाग्नेयं ब्रह्म संज्ञितम् ··· | अ. पु. 383.33 | | |
| | 2 अग्नियोगात्तदाग्नेयम् । | शि. पु. 5.44.131 | – | – |
| आङ्गिरसः | जग्राहाङ्गिरसं देव ····तस्मादाङ्गिरसा ज्ञेयाः सर्व एव तदन्वयाः । | महा. गी. प्रे. अनु. 85.137 | – | – |
| आचार्यः | 1 साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च । विवृणोति च मन्त्रार्थानाचार्यः सोऽभिधीयते ॥ | महा. पू. आश्व. अपे. 1.4.2528 | | |
| | 2 ब्रह्मोपदेशमेकत्र वेदशास्त्राण्यथैकतः । आचार्यः स तु विज्ञेयस्तदेकैकास्तु देशिकाः ॥ | ब्र. पु, 4.8.5 | | |
| | 3 स्वयमाचरते यस्मादाचारं स्थापयत्यपि । आचिनोति च शास्त्रार्थान् यमैः सन्नियमैर्युतः ॥ | वा. पु. पू. 59.30 | | |
| | 4 स्वयमाचरते यस्तु आचारे स्थापयत्यपि । आचिनोति च शास्त्रार्थानाचार्यस्तेन चोच्यते ॥ | लि.पु. उ. 20.20, लि.पु.पू. 10.16 | | |
| | 5 तत्रेष्टप्रापको धर्मः आचार्यैरुपदिश्यते ···· | म.पु. 245.28 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| आत्मर्षिः | गत्यर्थादृषतेर्धातोर्नामनिर्वृ तिरादितः । यस्मादेष स्वयम्भूतस्तस्माच्चात्मर्षिता स्मृता ।। | वा. पु. पू. 59.81 | |
| आत्मा | 1 यदाप्नोति यदादत्ते यच्चात्ति विषयानयम् । यच्चास्ति सततं भावस्तस्मादात्मा निरुच्यते ।। | लि. पु. 7.96 | |
| | 2 यदाप्नोति यदादत्ते यच्चास्ति विषयं प्रति । तच्चास्ति सततं भावस्तस्मादात्मा निरुच्यते ।। | वा. पु. पू. 5.32 | |
| आदिगदाधरः | 1 दधार तां गदामादौ देवैरुक्तो गदाधरः ।................ गदामादाववष्टम्भ्य गयासुरशिरः शिलम् । निश्चलार्थं स्थितो यस्मात्तस्मादादिगदाधरः ।। | वा. पु. उ. 47.12, 14 | |
| | 2 आद्यया गदया चासौ यस्माद्दैत्यः स्थिरीकृतः । स्थित इत्येव हरिणा तस्मादादिगदाधरः ।। | वा. पु. उ. 44.60 | |
| आदित्यः❀ | 1 आदित्यानदितिर्जज्ञे | महा. 12.200.26 | |
| | 2 अदित्यां जज्ञिरे.... आदित्याः । | महा.हरि. 3.14.57 | 8 24 |
| | 3 अदित्यां द्वादशादित्याः । | महा. गी.प्रे. शान्ति 339.81 | |
| | 4 अदितिः......आदित्याः । | वा.रा.अरण्य 14.14 | |
| | 5 यदादत्सि जगत् सर्वं रश्मिभिः प्रदहन्निव । युगान्तकाले सम्प्राप्ते परां सिद्धिमुपागतः ।। | हरि. 3.26.37 | |
| | 6 तस्मात्तत्तेज आदत्ते अग्निर्वायुश्च सर्वतः । अतस्त्वं कर्मणा तेन आदित्यः समपद्यत ।। | हरि. 3.26.36 | |
| | 7 आदानान्नित्यमादित्यस्तेजसां तमसामपि । | लि.पु.पू. 61.3 | |
| | 8 अदितिः सुषुवे पुत्रमादित्यं कश्यपात् प्रभुम् । | कू.पु.पू. 20.1 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 9 आदानादिक्रियायान्तु आदित्य इति चोच्यते । | वा.पु.पू. 12.35 | |
| | 10 आदानान्नित्यमादित्यस्तमसां तेजसां महान् । | वा.पु.पू. 53.53 | |
| | 11 आदानान्नित्यमादित्यस्तपसां तेजसामयम् । अदितेर्वा सुतो यस्मान्निगमज्ञैरुदाहृतः । अपत्यप्रत्ययात्तस्मात्सूर्यस्यादित्यता स्मृता ॥ | सा. पु. 8.16, 17 | |
| | 12 सर्वग्रहाणामेतेषामादिरादित्य उच्यते । | लि.पु.पू. 61.50 ब्र. पु. 1.24.139 | |
| | 13 अदितिः सुषुवे पुत्रमादित्यं कश्यपाद् द्विजाः । | लि.पु.पू. 65.2 | |
| | 14 आदित्यश्चादिभूतत्वात् । | म.पु. 2.31 | |
| **आदिदेव:** | आदित्वादादिदेवोऽसौ । | लि.पु. 70.100 कू.पु.पू. 4.59 | |
| **आनकदुन्दुभिः (वसुदेव:)** | 1 — — ····यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन् (प्राणदद्दिवि–(वा. पु.) दिवि । आनकानां च संह्लादः सुमहान् अभवद्दिवि ॥ | हरि.1.34.19 | — — |
| | 2 वसुदेवस्य जातमात्रस्यैव —···· देवैर्दिव्यानकदुन्दुभयो वादिताः । ततश्चास्यानकदुन्दुभिसंज्ञामवाप । | वि.पु. 4.14.29 | |
| | 3 देवदुन्दुभयो नेदुरानका यस्य जन्मनि । वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ॥ | भा. पु. 9.24.30 | |
| **आनन्द:** | आनन्देति च नामास्य पिता चक्रे विधानतः । मुदा परमया युक्तो विक्रान्तः स नराधिपः ॥ | मा. पु. 7.6.21 | |
| **आभूतसम्प्लव:** | 1 त्रैलोक्ये यानि सत्त्वानि गतिमन्ति ध्रुवाणि च । आभूतेभ्यः प्रलीयन्ते तस्मादाभूतसम्प्लवः ॥ | वा.पु.उ. 38.238 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 अग्रेभूतः प्रजानान्तु तस्माद्भूतः प्रजापतिः । आभूतः प्लवते चैव तस्मादाभूतसम्प्लवः ॥ | वा.पु.उ. 38.239 | |
| आरुणिः | बालोऽप्यरुणवर्णश्च जातः सद्योऽतितेजसा । प्रज्वलन् ऊर्ध्वतपसा चारुणिस्तेन कीर्तितः ॥ | ब्र.वै.ब्र.ख. 22.10 | |
| आर्तायनिः (शल्यः) | ऋतमेव हि पूर्वास्ते वहन्ति पुरुषोत्तमाः। तस्मादार्तायनिः प्रोक्तः——·····॥ | महा. 8.23.44 | |
| आर्हतः | 1 ते च बौद्धा बभूवुर्हि तेभ्योऽन्ये वेदवर्जिताः । आर्हतः सोऽभवत् पश्चादार्हतानकरोत् परान् ॥ | अ. पु. 16.4 | |
| | 2 आर्हतैतं महाधर्मं मायामोहेन ते यतः । प्रोक्तास्तमाश्रिता धर्ममार्हतास्तेन तेऽभवन् ॥ | वि. पु. 3.18.12 | |
| आलम्बनं | रत्यादिभाववर्गोऽयं यमाजीव्योपजायते । आलम्बनविभावोऽसौ नायकादिविभवस्तथा ॥ | अ. पु. 339.37 | |
| आवसथ्यः | आहुतिः सर्वमाख्यातं तस्मिन् वसति सोऽनलः । आवसथ्य इति ख्यातः । | महा. आश्व. अपे. 1.4.2576½ | |
| आवहः | अम्बरे स्नेहमभ्रेभ्यस्तडिद्भ्यश्चोत्तमद्युतिः । आवहो नाम संवाति द्वितीयः श्वसनो नदन् ॥ | महा.12.315·37 | — — |
| आस्तीकः | अस्तीत्युक्त्वा गतो यस्मात्पितागर्भस्थमेव तम् । वनं तस्मादिदं तस्य नामास्ती (स्ति) केति विश्रुतम् ॥ | महा. 1.44.20 | — — |
| आहवनीयः | 1 आहुतिः सर्वमाख्यातं हवनं हव्यवाहनम् । सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम् । | महा. आश्व. अपे. 1.4.2594-95 | — — |
| | 2 आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते । तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः ॥ | तत्रैव 1.4.2614-15 | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 3 आहोमाद्योऽग्निहोत्रेषु यज्ञे वा यत्र सर्वशः । यस्मादस्मिन् प्रवर्तन्ते ततो ह्याहवनीयता ॥ | तत्रैव 1.4.2616-17 | | |
| | 4 शंस्यस्त्वाहवनीयोऽग्निर्यः स्मृतो हव्यवाहनः । | ब्र.पु. 1.12.12, वा.पु.पू. 29.11; ब्रह्म. 3.72.25 | | |
| इक्ष्वाकुः❀ | 1 क्षुवतस्तु मनोस्तात इक्ष्वाकुरभवत् सुतः । | हरि. 1.11.12 | 6 | 3 |
| | 2 यन्मनुरक्षौत्तत इक्ष्वाकुः । | हरि. 9.38 | | |
| | 3 क्षुतवतश्च मनोरिक्ष्वाकुः पुत्रो जज्ञे घ्राणतः । | वि. पु. 4.2.11 | | |
| | 4 क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः । | भा. पु. 9.6.4 | | |
| इज्या | इज्या च यागभरणात् । | ब्र.वै.प्र.ख. 9.31 | | |
| इध्मवाहः | इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् । | महा. वनपर्व 99.23-27 | | |
| इन्द्रः | ऐश्वर्यं परमं यस्य पन्नगाश्च सुरासुराः । इदिश्च परमैश्वर्ये धातुरिन्द्रस्ततस्तु सः ॥ | साम्ब. पु. 8.31 | | |
| इन्द्रजित् | त्वमप्रतिकर्माणमिन्द्रं जयसि संयुगे । | वा.रा.यु. 80.4 | – | – |
| इन्द्रतीर्थ | तस्य नाम्ना च तत्तीर्थं ............ इन्द्रतीर्थमिति ख्यातम् । | महा. 9.48.5 | – | – |
| इन्द्रवाहनः | इन्द्रो वाहः कृतो येन तेन नाम्नेन्द्रवाहकः । | दे. भा. 7.9.28 | | |
| इन्द्रियं | इन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते । | महा.12.207.23 | – | – |
| ईश्वरः | 1 ईशस्त्वं सर्वभूतानामश्विरोऽसि ततो हरे । | हरि. 3.88.53½ | | |
| | 2 शक्रादिषु च देवेषु तस्यैश्वर्यमिहोच्यते । स एव व्यावृतो नित्यं त्रैलोक्यस्य शुभाशुभे । ऐश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते । | महा. गी. प्रे. अनु. 161.28 | | |
| | 3 साक्षात्सर्वं विजानाति महात्मा तेन चेश्वरः । | लि. पु. 70.21; वा. पु. पू. 4.34 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 4 जानातेर्ज्ञानमित्याहुर्भगवान् ज्ञान-सन्निधिः। बन्धनादिपरीभावादीश्वरः प्रोच्यते बुधैः ॥ | लि. पु. 70.36 | | |
| | 5 सर्वगत्वाच्च देवानामवश्यत्वाच्च ईश्वरः । | लि. पु. 70.102 | | |
| | 6 सर्वेशत्वाच्च लोकानामवश्यं च तथेश्वरः । | वा. पु. पू. 4.40 | | |
| | 7 सर्वेशत्वात्············ | वा. पु. पू. 5.38 | | |
| | 8 वशित्वादप्यवश्यत्वादीश्वरः परि-भाषितः । | कू. पु. पू. 4.61 | | |
| | 9 ईश एवाहमत्यर्थं न च मामीशते परे। ददामि च सदैश्वर्यमीश्वर-स्तेन कीर्तितः ॥ | स्क. पु. (श. क.) | | |
| उग्रसेनः | उग्रसेन इति ख्यातो महासेनपराक्रमः। | हरि. 1.54.63 | – | – |
| उच्छ्वासनं | खलीकृत्य चतुष्केण तुरङ्गो वल्गयाऽन्यया । उच्छ्वस्य ग्राह्यतेऽन्यत्र तत् स्यादुच्छ्वासनं पुनः ॥ | अ. पु. 288.48 | | |
| उत्कला | उत्कलस्योत्कला राजन् । | हरि. 1.10.19 | – | – |
| उत्तंकमेघः | उत्तङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते । | महा. 14.54.33-35 | – | – |
| उत्प्रेक्षा | अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते । | अ. पु. 344.25 | | |
| उदकं ❀ | तेषां (दैत्यानामुरगाणां) अधोगतं यत् (पातालं) तदुकेत्यभिसंज्ञितम् । | हरि. 3.12.13 | 8 | 9 |
| उदयः | यत्रोद्यन् दृश्यते सूर्यस्तेषां स उदयः स्मृतः । | वा. पु. पू. 50.107 | | |
| उदानः | 1 उदानोर्ध्वंशरीरिणः । | हरि. 1.40.56 | – | – |
| | 2 उदानादुच्छ्वसिति प्रतिभेदाच्च भाषते । | महा. 12.177.25 | | |
| | 3 उदीरयन् सर्वधातून् अत ऊर्ध्वं प्रवर्तते । उदान इति तं विदुः··········॥ | महा. गी.प्रे. अनु. 145दा.पा.6017(17) | | |
| | 4 प्राणानामायम्यते येन तमुदानं प्रचक्षते । | महा. 14.20.17 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 प्राणानामायतत्वेन तमुदानं प्रचक्षते। —(पाठभेद:) | महा. गी.प्रे.आश्व 20.17 | |
| | 6 उद्वेजयति मर्माणि उदानोऽयं प्रकीर्तित:। | लि. पु. पू. 8.64 अ. पु. 214.11 | |
| उद्दालक: | यस्माद् भवान् केदारखण्डमवदार्योत्थितस्तस्मादुद्दालक एवं नाम्ना भविष्यतीति। | महा. 1.3.29 | – – |
| उद्दीपनं | उद्दीपनविभावास्ते संस्कारैर्विविधै: स्थितै:। आलम्बनविभावेषु भावानुद्दीपयन्ति ये।। | अ.पु. 349.48 | |
| उद्भिज्जं | भित्वा तु पृथिवीं यानि जायन्ते कालपर्ययात्। उद्भिज्जानि च तान्याहुर्भूतानि।। | महा. 14.42.22 | |
| उद्वह: | उदयं ज्योतिषां शश्वत् सोमादीनां करोति य:।.... .... ---यश्चतुर्भ्य: समुद्रेभ्यो वायुर्धारयते जलम्। उद्धृत्याददते चापो जीमूतेभ्योऽम्बरे-निल:। उद्वहो नाम------। | महा. 12.315.38-40 | |
| उपमा | उपमा नाम सा यस्यामुपमानोपमेययो:। सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षितम्।। | अ.पु. 344.6 | |
| उपरिचर: | 1 त्वमेक: सर्वमर्त्येषु विमानवरमास्थित:। चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव।। | महा. 1.57.14 | |
| | 2 अन्तरिक्षचर: श्रीमान्....। | महा. 12.324.6 | |
| उपवास: | उपावृत्तस्य पापेभ्यो यस्तु वासो गुणै: सह। उपवास: स विज्ञेय: सर्वभोगविवर्जित:। | अ पु. 175.6 | |
| उपविद्ध: | उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत् सुत:। | अ. पु. 256.19 | |
| उपाध्याय: | कृत्वोपनयनं वेदान्योऽध्यापयति नित्यश:। स चोपाध्याय उच्यते। | आश्व. अपे. 1.4.2525½ | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| उपेन्द्रः | 1 ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः। उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः ।। | हरि. 2.19.46 | – | – |
| (कृष्णः) | 2 त्वां कृष्णाभिषेक्ष्यामि गवां वाक्य-प्रचोदितः । उपेन्द्रत्वे गवामिन्द्रः ——————। | वि. पु. 5.12.18 | | |
| (विष्णुः) | 3 वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः । मङ्गलानां व्रतानाञ्च कल्पं स्वर्गापवर्गयोः। उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्वविभूतये ।। | भा. पु. 8.23.22-23 | | |
| उमा❀ | 1 एका तत्र निराहारा तां माता प्रत्यषेधयत् । उ मा इति निषेधन्ती सा तथोक्ता तया मात्रा·········——···· उमेत्यभवत् ।। | हरि. 1.18.18-20 | 3 | 8 |
| | 2 निषेधयन्ती ह्युमेति माता स्नेहेन दुःखिता। सा तथोक्ततया देवी मात्रा दुश्चरचारिणी । उमेति सा महाभागा त्रिषु लोकेषु विश्रुता ।। | वा.पु.उ. 11.12 | | |
| | 3 उ मेति चञ्चले पुत्रि न क्षमं तावकं वपुः । सोढुं क्लेशस्वरूपस्य तपसः सौम्यदर्शने ।। | म. पु. 154.294 | | |
| | 4 उ मेति चपलो पुत्रि त्वयोक्ता तनया ततः। उमेति नाम तेनास्याः भुवनेषु भविष्यति ।। | म. पु. 154.299 | | |
| | 5 तपोनिषिद्धा तपसे वनं गन्तुं च मेनया । हेतुना तेन सोमेति नाम प्राप शिवा तदा ।। | शि.पु. रुद्र संहिता पार्वती खण्ड 22.25 | | |
| उर्वः | तस्य उर्वो ऋषिर्जज्ञे उरुं भित्वा महायशाः । | वा.पु.उ. 4.47 | | |
| उर्वशी❀(गंगा) | 1 उपह्वरे निवसतो यस्यांके निषसाद ह । गंगा-तस्मादुर्वशी ह्यभवत्पुरा । | महा. 12.29.61 | 8 | 10 |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 2 अनादिनिधनस्याथ जज्ञे नारायणस्य या। ऊरोः सर्वानवद्याङ्गी उर्वश्येकादशी मता ॥ | वा. पु. 8.51 | | |
| उर्वी❀ | 1 उरुणा धारयामास कश्यपः पृथिवीं ततः। निमज्जन्तीं तदा राजंस्तेनोर्वीति मही स्मृता ॥——धृता तेनोरुणा येन—(पाठभेदः) | महा. 12.49.64 महा. चि. शान्ति 49.73 | 8 | 2 |
| | 2 हरेरुरौ च या जाता सा चोर्वी परिकीर्तिता। | ब्र. वै. प्र. ख. 9.30 | | |
| ऊर्ध्वरेताः | इत्युक्ता चोर्ध्वमनयद् रेतो वृषभवाहनः। ऊर्ध्वरेताः समभवत्——। | महा. गी. प्रे. अनु. 84.72 | – | – |
| ऊर्ध्वस्रोतः | 1 ऊर्ध्वस्रोतस्तृतीयस्तु सात्त्विकोर्ध्वमवर्तत। ते सुखप्रीतिबहुला बहिरन्तस्त्वनावृताः ॥ | मा.पु. 47.22 वि.पु. 1.5.12 | | |
| | 2 ऊर्ध्वस्रोतास्तृतीयस्तु स वै चोर्ध्वं व्यवस्थितः। यस्मात्प्रवर्तते चोर्ध्वमूर्ध्वस्रोतस्ततः स्मृतः ॥ | लि. पु. 70.147 | | |
| | 3 पाठभेदः—तृतीय चरणे—यस्माद्व्यवर्ततोर्ध्वन्तु। | वा. पु. पू. 6.45 | | |
| ऋक्षवान् | ऋक्षैः संवर्धितो (विदूरथः क्षत्रियः) विप्रः ऋक्षवत्येव पर्वते। | महा. 12.49.67 | – | – |
| ऋणादानं | ऋणं देयमदेयञ्च येन यत्र यथा च यत्। दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥ | अ. पु. 253.13 | | |
| ऋतधामा | धाम सारो हि लोकानामृतं चैव विचारितम्। ऋतधामा ततो विप्रैः सत्यश्चाहं प्रकीर्तितः ॥ | महा. 12.330.4 | – | – |
| ऋतुः | ऋतात्तु ऋतवो यस्माज् जज्ञिरे ऋतवस्ततः। | वा.पु.पू. 30.22 | | |
| ऋषभः | 1 ऋषभप्रतिमं चैव ऋषभं नाम पर्वतम्। | हरि. 3.35.20 | – | – |
| | 2 ऋषभस्तु ततः कल्पो ज्ञेयः पञ्चदशो द्विजाः। ऋषभो यत्र सम्भूताः स्वरो लोकमनोहरः ॥ | वा.पु.पू. 21.31 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| ऋषिः | 1 ऋषिः सर्वत्रगत्वेन.... । | कू. पु. पू. 4.61 | | |
| | 2 ऋषि हिंसागतौ धातुर्विद्यासत्य-तपश्रुतिः । एष सन्निचयो यस्मात् ब्राह्मणाश्च ततः त्वृषिः ।। | म. पु. 144.81 | | |
| | 3 गत्यर्थादृषते र्धातोर्नामनिर्वृतिका-रणम् । यस्मादेष स्वयम्भूतस्त-स्माच्च ऋषिता मता ।। | म. पु. 144.83 | | |
| | 4 ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ । एतत्सन्नियते तस्मिन् ब्रह्मणा स ऋषिः स्मृतः ।। | वा. पु. पू. 59.79 | | |
| | 5 ऋषिः सर्वगतत्वाच्च शरीरी सोस्य यत्प्रभुः । स्वामित्वमस्य यत्सर्व— ........—....।। | लि. पु. 70.97 | | |
| एकदन्तः | एकः शब्दः प्रधानार्थः दन्तश्च बल-वाचकः । तयोरीशं परब्रह्म गणेशं प्रणमाम्यहम् ।। | ब्र. वै. ग. ख. 44.88 | | |
| एकपर्णा※ | आहारमेकपर्णेन एकपर्णा समाचरत् । | हरि. 1.18.17 | 3 | 9 |
| एकपर्णी | आहारमेकपर्णेन एकपर्णी (र्णा) समाचरत्ः | वा. पु. उ. 11.8 | | |
| एकपाटला※ | 1 पाटलापुष्पमेकञ्च आदद्यावेकपाटला। | हरि. 1.18.17 | 3 | 10 |
| | 2 पाटलामेकपाटला । पाटलेनैव चैकेन विदध्यादेकपाटला । | वा. पु. उ. 11.9 | | |
| एकशृंगः | एकशृंगः पुरा भूत्वा वराहो दिव्य-दर्शनः । इमामुद्धृतवान् भूमिमेक-शृंगस्ततो ह्ययम् । | महा. 12.330.27 | – | – |
| एकाक्षिपिंगलः | देव्या दग्धं प्रभावेण यच्च सव्यं तवे-क्षणम् । एकाक्षिपिंगलेत्येवं नाम स्थास्यति शाश्वतम् ।। | वा. रा. उत्तर 13.31 | – | – |
| ऐरावतः | ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् । तस्यास्त्वैरावतः पुत्रो लोक-नाथो महागजः ।। | वा. रा. अरण्य 14.25 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| ऐल: | 1 तस्यापत्यं महाराज्ञो बभूवैल: पुरुरवा: (तस्य बुधस्य)। | हरि. 1.25.46 | – – |
| | 2 सुद्युम्नश्च दिवं यात ऐलमुत्पाद्य (इलायां अवस्थायां इलेऽपि) | तत्रैव 1.10 26 | – – |
| ओ३म् (ॐ) | 1 अवनादोमिति स्मृत:। | कू.पु.पू. 4.63, 5.2 लि. पु. 70.98, वा. पु. पू. 5.34 | – – |
| | 2 मात्राश्चात्र चतस्रश्च विज्ञेया परमार्थत:। ऊकारस्त्वक्षरो ज्ञेय: उकार: स्वरित: स्मृत:। मकारस्तु प्लुतो ज्ञेयस्त्रिमात्र इति संज्ञित:।। | वा.पु.पू. 19.7, 8 | |
| | 3 अकारश्च तथोकारो मकारश्चाक्षरत्रयम्। एता एव त्रयो मात्रा: सात्त्वराजसतामसा:।। | मा. पु. 42.4 | |
| | 4 अकारस्त्वथ भूर्लोक उकारश्चोच्यते भुव:। सव्यञ्जनो मकारश्च स्वर्लोक: परिकल्प्यते।। | मा. पु. 42.10 | |
| | 5 ह्रस्वा तु प्रथमा मात्रा द्वितीया दैर्घ्यसंयुता। तृतीया च प्लुतार्द्धाख्या वचस: सा न गोचरा।। | मा. पु. 42.14 | |
| | 6 मात्रापदं रुद्रलोको ह्यमात्रस्तु शिवं पदम्। एवन्ध्यानविशेषेण तत्पदं समुपासते। तस्माद्ध्यानरतिर्नित्यममात्रं हि तदक्षरम्। उपास्यं ... ह्रस्वा तु प्रथमा मात्रा ततो दीर्घा त्वनन्तरम्। तत: प्लुतवती चैव तृतीया उपदिश्यते।। एतास्तु मात्रा विज्ञेया यथावदनुपूर्वश:। यावच्चैव तु शक्यन्ते धार्यन्ते तावदेव हि।। | वा.पु.पू. 20.1-14 | |
| | 7 ओमित्येतत्त्रयो लोकास्त्रयो वेदास्त्रयोऽग्नय:। विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च। मात्रा | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | चार्धं च तिस्रस्तु विज्ञेयाः परमार्थतः। तत्प्रयुक्तस्तु यो योगी तस्य सालोक्यमाप्नुयात्। अकारो ह्यक्षरो ज्ञेयः उकारः सहितः स्मृतः। मकारसहितोंकारस्त्रिमात्र इति संज्ञितः। अकारस्त्वेष भूर्लोक उकारो भुव उच्यते।। सव्यञ्जनो मकारस्तु स्वर्लोक इति गीयते। ओंकारस्तु त्रयो लोका शिरस्तस्य त्रिविष्टपम्। भुवनाङ्गं च तत्सर्वं ब्राह्मं तत्पदमुच्यते।। | लि. पु. पू. 91.51–55 | |
| | 8 अकारोकारमकारं स्थूलं सूक्ष्मं परात्परम्। ओंकाररूपमृग्वक्त्रं सामजिह्वासमन्वितम्।। | लि. पु. पू. 1.20 | |
| | 9 आद्यवर्णमकारं तु उकारं चोत्तरे ततः। मकारं मध्यतश्चैव नादान्तं तस्य चोमिति।। | लि. पु. पू. 17.21 | |
| | 10 अकारश्चाप्युकारश्च मकारश्च ततः परम्। वेदत्रयात्मकं प्रोक्तं प्रणवः ब्रह्मणः पदम्।। अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते। मकारस्त्वनयोर्दासः पञ्चविंशः प्रकीर्तितः।। वासुदेवस्वरूपं तदकारेणोच्यते बुधैः। उकारेण श्रियो देव्या रूपं मुनिभिरुच्यते।। मकारेणोच्यते जीवः पञ्चविंशोदितः पुमान्। | पद्म.पु.उ.ख. 254.22-25 स्कन्द पु.उ.ख. 226.22-25 | |
| | 11 आद्यवर्णमकारं च उकारमुत्तरे ततः। मकारं मध्यतश्चैव नादान्तं तस्य चोमिति।। जलवद्वर्णमाद्यं तु दक्षिणे चोत्तरे तथा। मध्ये मकारं शुचिवदोंकारे मुनिसत्तम।। अकारश्चाप्युकारोऽयं मकारश्च त्रयं क्रमात्। तिस्रो मात्रास्समाख्याता अर्द्धमात्रा ततः परम्।। | शि. पु. 6.3 15-17 | |
| औत्तमः | ततः स तस्यां तनयो जज्ञे राज्ञो महात्मनः। तस्य दृष्ट्वा वपुः कान्तं भविष्यं शीलमेव च। औत्तमश्चेति मुनयो नाम चक्रुः समागताः। जातोऽयमुत्तमे वंशे बालकाले तथोत्तमे। उत्तमावयवस्तेन औत्तमोऽयं भविष्यति।। | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| औपासन: | सृष्टमात्रो जगत्सर्वमत्तुमैच्छत् पुरा खलु। ततः प्रशमितः सोऽग्निरुपास्यैव मया पुरा। स ततोपासनात्सोऽयमौपासन इति स्मृतः ।। | महा. आश्व. अपे.1.4. 2573: 2575 | -- |
| औरस:❀ | औरसो धर्मपत्नीतः तत्समः पुत्रिकासुतः | अ.पु. 256/15 | |
| और्वः (ऋषिः) | 1 स और्व इति विप्रर्षिरुरुं भित्वा व्यजायत। | महा. 1.170.8 | 8 11 |
| (वाडवाग्निः) | 2 ऊर्वस्योरुं विनिर्भिद्य और्वो नामान्तकोऽनलः। | हरि. 1.45.50 | -- |
| | 3 ऊर्वस्तु तपसाविष्टो निवेश्योरुं हुताशने। ममन्थैकेन दर्भेण सुतस्य प्रभवारणिम्। तस्योरुं सहसा भित्त्वा ज्वालामाली ह्यनिन्धनः। जगतो दहनाकाङ्क्षी पुत्रोऽग्निः समपद्यत। ऊर्वस्योरुं विनिर्भिद्य और्वो नामान्तकोऽनलः। | म.पु. 175/48-50 | |
| | 4 तत्र संवर्त्तको नाम सोऽग्निः पिबति तज्जलम्। नाम्ना समुद्रपः श्रीमानौर्वः स वडवामुखः ।। | वा.पु.पू. 47/76 | |
| कंस:❀ | कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनि। कंसस्तस्माद् रिपुध्वंसी तव पुत्रो भविष्यति ।। | हरि. 2.28.103 | 4 14 |
| क:❀ | 1 य क इत्युच्यते ह्यविज्ञातः सहस्रशः। तत्सम्भवं........मां नावगच्छथ ।। | हरि. 3.13.14 | 3 11 |
| | 2 क्षेत्र-क्षेत्रज्ञ-विज्ञानादेकत्वाच्च स कः स्मृतः। | वा. पु.पू. 4.41 | |
| | 3 कस्तस्य मेढ्रम्। | भा. पु. 2.1 | |
| | 4 मेढ्रतः कः। | भा. पु. 8 3.39 | |
| | 5 मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत्। रेतसांशेन येनासावानन्दं प्रतिपद्यते ।। | भा. पु. 3 6.19 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| ककुत्स्थः꙳ | 1 इन्द्रस्य वृषभूतस्य ककुत्स्थोऽजयतासुरान् । पूर्वं देवासुरे युद्धे ककुत्स्थस्तेन हि स्मृतः ।। | हरि. 1.11.20 | 6 4 |
| | 2 वचनाद् देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः । वाहनत्वेन कृतस्तस्य वभूवेन्द्रो महावृषः ।। स्तूयमानः समारुह्य युयुत्सु; ककुदि स्थितः । — — — — | | |
| | जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये । प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः ।। | भा.पु. 9/6/14,19 | |
| | 3 यतश्च वृषभककुदि स्थितेन राज्ञा दैतेयबलं निषूदितमतश्चासौ ककुत्स्थ संज्ञामवाप ।। | वि.पु. 4/2/32 | |
| | 4 तमारुरोह राजाऽसौ सङ्ग्रामगमनाय वै । स्थित; ककुदि येनास्य ककुत्स्थस्तेन चाभवत् ।। | दे.भा. 79/27 | |
| | 5 इन्द्रस्य वृषभूतस्य ककुत्स्थो जायते पुरा । पूर्वमाडीबके युद्धे ककुत्स्थस्तेन सः स्मृतः ।। | वा.पु.उ. 26/25 | |
| कनखलं | 1 स्नातः कनकवद् भाति नरो याति पवित्रताम् । अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ।। | वा.पु.उ. 49/8 | |
| | 2 खलः को नाम मुक्तिर्वै भजते तत्र मज्जनात् । अतः कनखलं तीर्थं नाम्ना चक्रुर्मुनीश्वराः ।। | स्क पु. गंगामाहात्म्य खण्ड | |
| | 3 तीर्थं कणखलं पुण्यं । | अ.पु. 109/17 | |
| कन्या꙳ | सर्वान् कामयते यस्मात् कनेर्धातोश्च भामिनि । तस्मात्कन्येह सुश्रोणि | महा. 3.291.13 | |
| | स्वतन्त्रा वरवर्णिनि ।। (कमेर्धातो.- पाठभेदः) | महा. ग. वन 306.13 | 7 3 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| कपालमोचनं | कपालमोचनमिति नाम चक्रु: समागता: (आख्यानम्) | महा. 8.38.20 | – – |
| कपिलाह्लदं | कपिलाह्लदमित्येवं तथा वै ब्रह्मणा कृतम् । गवां स्तन्यजलो येन तीर्थं पुण्यतमं महत् ।। | लि.पु.पू. 92/69 | |
| कबन्धः | आख्यानमात्रम् | वा.रा. अरण्य 71.1–20 | |
| करन्धमः | 1 ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम् । एतस्मात् कारणाद्राजन् विश्रुतः स करन्धमः ।। | महा.14.4. 15–16 | – – |
| | 2 धुतयोः करयोर्जज्ञे यतस्तस्यारिदाहृदम् । वलं करन्धमस्तस्मात् स वलाश्वोऽभिधीयते ।। | मा.पु. 121.16 | |
| करी | करात् करी । | वा.पु.उ. 8.227 | |
| कर्दमः | 1 शृणु नामानि रुद्राणां वेदोक्तानि च यानि च । छायायाः कर्दमो जातः— — | ब्र.वै.ब्र.ख. 7.26 | |
| | 2 वेदेषु कर्दमः शब्दः छायायां वर्तते स्फुटः । वभूव कर्दमाद् बालः कर्दमस्तेन कीर्तितः ।। | ब्र.वै.ब्र.ख. 22.5 | |
| कलावती | ततः कलाभिः सोमस्य वर्द्धन्तीभिरवक्षयम् । आप्यायमानाहरहो वृद्धिं याताऽस्मि सत्तम ।। ततः कलावतीत्येतन्मम नाम महात्मना ।। | मा.पु. 64.10 | |
| कलिंगः | कलिंगविषयश्चैव कलिंगस्य च स्मृतः । | महा. 1.104.50 | – – |
| कल्पं | 1 सर्वयज्ञविकल्पाय पुरा कल्पं प्रकीर्तितम् । | महा.अपे.1.4. 2670–71 | – – |
| (कल्पः) | 2 कल्पस्यादौ सुबहुला यस्मात्संस्थाश्चतुर्दश । कल्पयामास वै ब्रह्मा तत्स्मात्कल्पो निरुच्यते ।। | ब्रह्माण्ड 1.6 74 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| कल्माषपादः | 1 तेनास्य राज्ञस्तौ पादौ तदा-कल्माषतां गतौ । तदाप्रभृति राजाऽसौ सौदासः···कल्माषपादः संवृत्तः ख्यातश्चैव तथा नृपः ।। | वा.रा. उत्तर 65.32·33 | |
| | 2 आख्यानमात्रम् | महा.चि. आदि. 166.68 | – – |
| | 3 सस्याम्बुदरक्षणार्थः तच्छायाम्बु नोर्व्यां न चाकाशे चिक्षेप, किन्तु तेनैव स्वपदौ सिषेच । तेन च क्रोधाश्रितेनाम्बुना दग्धच्छायैः तत्पादौ कल्माषतामुपगतौ ततः स कल्माषपादसंज्ञामवाप । | वि.पु.4.4.57 | |
| कविः | कविर्विक्रान्तदर्शनात् । | लि.पु.70.104; वा.पु.5.41 | |
| कश्यपः❋ | 1 कुलं कुलं च कुवमः कुवमः कश्यपो द्विजः । काश्यः काशनिकाशत्वादेतन्मे नाम धारय ।। | महा. 13.95.29. गी. प्रे. अनु. 93.86 | 5 5 |
| | 2 कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः । | वा.पु.34.116 | |
| | 3 कश्यपानात्तु कश्यपः । | मा.पु.108.3 | |
| | 4 अपिबत्स तदा कश्यं कश्यं मद्यमिहोच्यते ।····——···· कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः । | वा.पु.उ. 4.115–117 | |
| काकुत्स्थः | 1 भगीरथात्ककुत्स्थस्तु काकुत्स्था येन विश्रुता । | वा.रा. अयोध्या 110.28 | – – |
| | 2 ककुत्स्थश्चाति विख्यातो नृपतिस्तस्य वंशजाः । काकुत्स्थो भुवि राजानो बभूवुर्बहुविश्रुताः ।। | दे.भा.7.9.30 | |
| | 3 तिष्यां ज्येष्ठः ककुत्स्थोऽभूत् काकुत्स्थस्तु सुयोधनः । | कू.पू.पू. 20.11 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| काञ्चनष्ठीवी | बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् । | महा. 12.31.24 | – – |
| काण्वायन: | मेघातिथि: सुतस्तस्य (कण्वस्य) यस्मात्काण्वायना द्विजा: । | हरि. 1.32.5 | – – |
| कात्यायन: | देवश्रवा: कतिश्चैव यस्मात् कात्यायना: स्मृता: । | हरि. 1.32.55 | – – |
| कादम्बरी | कदम्बकोटरे जाता नाम्ना कादम्बरीति सा । | हरि. 2.41.13 | – – |
| कानीन: | 1 कानीन: कन्यकाजात: ।<br>2 पूर्वमेवानूढायाञ्च भगवता भास्वता कानीन: कर्णो नाम पुत्रोऽजन्यत । | अ.पु.256.16<br><br>वि.पु.4.14.36 | – – |
| कान्तिमती | सोमस्य परमा पुरी । नाम्ना कान्तिमती शुभ्रा तस्यां सोमो विराजते । | कु.पू.पू. 46.23 | – – |
| कापिलेय: | ब्राह्मणी कपिला नाम......तस्या: पुत्रत्वमागम्य स्त्रिया:पिबति स्तनौ । तत: स कापिलेयत्वं लेभे ...... | महा. 12.211 14–15 | – – |
| काम: | 1 सनातनो हि संकल्प: काम इत्यभिधीयते ।<br>2 संकल्पाभिरुचि: काम: सनातनतमोऽभवत् ।<br>3 जगत्सु कामरूपस्त्व त्वत्समो नहि विद्यते । अतस्त्वं काम: नाम्नाऽपि ख्यातो भव मनोभव: ।। | महा.गी.प्रे.अनु. 85.11<br>तत्रैव 85.16<br>कालिका पु. (श.क) | – – |
| कामदुधा | तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मन: । उक्ता कामान् प्रयच्छेति सा कामान् दुदुहे तत: ।। | महा. 1.65.9 | – – |
| कारूष: | 1 करूषस्य च कारूषा: क्षत्रिया: ।<br>2 कारूषा: क्षत्रिया: शूरा: करूषस्याभवन् सुता: ।<br>3 करूषान्मानवादासन् कारूषा: क्षत्रजातय: । | हरि. 1.10.29. 1.11.9<br>मा.पु.113.1<br>भा.पु.9.2.16 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 करूषस्य तु कारूषा बहवः प्रथिता भुवि । | म. पु. 12.24 | |
| | 5 मनोः पुत्रः करूषः करूषात्कारूषा क्षत्रियाः । | वि. पु. 4.1.18 | |
| | 6 करूषस्य तु कारूषाः सर्वे प्रख्यात-कीर्तयः । | लि. पु. पू. 66.51 | — — |
| कार्तिकेयः | 1 क्षीरसम्भावनार्थाय कृत्तिकाः समयोजयत् । ताः क्षीरं जातमात्रस्य ....ददुः— ....ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ।। | वा. रा. बाल. 37.24-25 | — — |
| | 2 पुत्रं वै ताश्च तं बालं पुपुषुः स्तन्यविश्रवैः । ततः स कार्तिकेयत्वम्.... — — | महा. गी. प्रे. अनु. 85.81 तु.-महा. गी.प्रे. अनु. 86.13 | |
| | 3 अपत्यं कृत्तिकानां तु कार्त्तिकेय इति स्मृतः । | हरि. 1.3.43; ब्र.पु. 3.41; वि.पु. 1.15. 1.16; म.पु. 5.27 | |
| | 4 ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः । | महा. 9.43.11 | — — |
| | 5 कृत्तिकाभ्युपपत्तेश्च कार्तिकेय इति स्मृतः । | महा. 1.60.23 | — — |
| | 6 कृत्तिकाभिस्तु यस्मात् संवर्द्धितः स पुरातनः । कार्तिकेय इति ख्यातस्तस्मादरिसूदनः ।। | वा. पु.उ. 11.43 | |
| कार्ष्णः (वेदः) | कार्ष्णवेदमिमं सर्वम्....... — | महा. 18.5.35 | — — |
| कालः | 1 कालः कलयति प्रजाः । | महा. 12.220.35 | — — |
| | 2 काले परिणते काले कालयिष्यति मामिव । | महा. 12.220.40 | — — |
| | 3 कल्पस्यादौ तु बहुशो यस्मात् संस्थाश्चतुर्दश । कल्पयामास वै ब्रह्मा तस्मात् कालो निरुच्यते ।। [हिन्दी वायुपुराणे—श्रीरामप्रताप त्रिपाठिना कालः कल्पः इति लिखितम् पृ. 26] | वा. पु. पू. 7.7.1 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 कालं कलार्द्धं कलयन् सर्वेषां त्वं हि तिष्ठसि। तस्मात् कालेति ते नाम प्रोच्यते तत्त्वदर्शिभिः ॥ | म. पु. 213.5 | |
| | 5 कालः करोति सकलं कालं कलयते सदा। | लि. पु. पू. 28.14 | |
| | 6 कलानां सुपरीणामात् काल इत्यभिधीयते। | वा. पु. उ. 38.225 | |
| काश्यपी | 1 पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः (कश्यपस्य)। | महा. गी. प्रे. अनु. 154.7 | – – |
| | 2 कश्यपस्येयम्। | ब्र.वै.प्र.ख. 9.33 | – – |
| काश्यपेयः | इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः। | महा. गी.प्रे. अनु. 150.14-15 | – – |
| किरीटी | पुरा शक्रेण मे दत्तं किरीटं मूर्ध्नि सूर्याभं तेनाहुर्मां किरीटिनम्। | महा. 4.39.15 | – – |
| कुजृम्भः (दानवः) | स जृम्भयति यत्पृथ्वीं कुजृम्भः प्रोच्यते ततः। | मा. पु. 116.16 | – – |
| कुञ्जरः | कुञ्जरः कुञ्जचारित्वात्। | वा.पु.उ. 8.228 | – – |
| कुन्ती | 1 शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ। तस्मात्कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा ॥ | हरि. 1.34.24 | – – |
| | 2 अनपत्याय वृद्धाय कुन्तिभोजाय तां ददौ। तस्मात्कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा ॥ | वा.पु.उ. 34.51 | |
| | 3 अथ सख्येन वृद्धेऽसौ कुन्तिभोजे सुतां ददौ। एवं कुन्ती समाख्याता वसुदेवस्वसा प्रथा (पृथा) ॥ | म. पु. 46.7 | |
| कुबेरः | 1 पितामहः इष्ट्वा श्रेयस्करीं बुद्धि धनाध्यक्षो भविष्यति। | वा.रा.उत्तर 3.6½ | |
| | 2 कुत्सायां क्विति शब्दोऽयं शरीरं बेरमुच्यते। कुबेरः कुशरीरत्वा न्नाम्ना तेनैव सोऽङ्कितः ॥ | वा.पु.उ. 9.39 | – – |
| कुमारः | 1 सदा कुमारो देवानाम्। | महा.गी.प्रे.अनु.86.32 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 2 दीप्तो मारयितुं दैत्यान् कुत्सितान् कनकच्छविः । एतस्मात्कारणाद्देवः कुमारश्चापि सोऽभवत् ।। | म. पु. 158.41 | | |
| कुम्भकः | 1 न मुञ्चति न गृह्णाति वायुमन्तर्बहिः स्थितम् । सम्पूर्णकुम्भवत् तिष्ठेदचलः स तु कुम्भकः ।। | अ. पु. 373.9 | | |
| | 2 पिधाय सर्वद्वाराणि विश्वासोच्छ्वासवर्जितः । सम्पूर्णकुम्भवत् तिष्ठेत् प्राणायामः स कुम्भकः ।। | अ. पु. 214.22 | – | – |
| कुम्भकर्णः | कुम्भकर्णो बृहत्कर्णः ––। | वा.रा. युद्ध 65.29 | | |
| कुरुक्षेत्रं | 1 तस्य (कुरोः) नाम्नाभिविख्यातं पृथिव्यां कुरुजांगलम् । कुरुक्षेत्रं च तपसा पुण्यं चक्रे महातपाः ।। | महा. 1.80.43 | – | – |
| | 2 प्रकृष्टमेतत्कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे । | महा. 9.52.2 | – | – |
| | 3 संवरणात् कुरुः । य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार । | वि. पु. 4.19.77 | | |
| | 4 कुरुः संवरणादभूत् । यः प्रयागं पदाक्रम्य कुरुक्षेत्रं चकार ह । | वा.पु.उ. 37.210 | | |
| कुलपतिः꙰ | कुलानि पातयत्येष (ब्राह्मणः) | वा.रा.उत्तर 2.45 | 7 | 4 |
| कुलम्पुन(तीर्थं) | ······ स्नात्वा पुनाति स्वकुलं नरः । | महा. 3.81.88 | – | – |
| कुशः꙰ | सः (पूर्वजः) कुशैर्मन्त्रसत्कृतैः निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत् । | वा.रा.उत्तर 66.7 | 6 | 5 |
| कुशवान् | ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् । | महा. चि. वनपर्व 130.15 | – | – |
| कुशावती | कुशस्य नगरी ––––––कुशावतीति नाम्ना सा । | वा. रा. उत्तर 108.4 | – | – |
| कुहूः | 1 यां तु दृष्ट्वा भगवतीं जनः कुकुहायते । एकानंशेति तामाहुः कुहूमांगिरसः सुताम् ।। | महा. 3.208.8 | – | – |
| | 2 द्वौ द्वौ लवावमवास्यां यः कालः पर्वसन्धिषु । द्वयक्षरं कुहुमात्रं तु एवं कालस्तु सः स्मृतः ।। | वा.पु.पू. 56.43 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 कुहेति कोकिलेनोक्तं यस्मात्कालात् समाप्यते। तत्कालसंहिता ह्येषा अमावास्या कुहूः स्मृता ।। | भा. पु. 10.54.48 | |
| | 4 अनुमतिश्च राका च सिनीवाली कुहूस्तथा। एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ।। | म. पु. 141.50 | |
| | 5 द्वौ द्वौ लवावमावास्यां स कालः पर्वसन्धिषु। द्व्यक्षरः कुहुमात्रश्च पर्वकालस्तु सः स्मृतः ।। | म. पु. 141.43 | |
| कृतयुग | कृतं नाम युगं तात यमः धर्मः सनातनः। कृतमेव न कर्तव्यं तस्मिन् काले युगोत्तमे ।। | महा.3.148.10 – | – |
| कृत्तिवासेश्वरः | हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः। वासस्तस्या करोत्कृत्तिं कृत्तिवासेश्वरस्तथा ।। | कू.पु.पू. 23.18 – | – |
| कृपः | 1 कृपया तच्च जग्राह शन्तनुर्मृगयां गतः। कृपः स्मृतः स वै तस्माद्……। | हरि.1.32.73; वा.पु.उ.37.199 | – – |
| | 2 कृपया यन्मया बालाविमौ संवर्धिताविति। तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ।। | महा. 1.120.18 | |
| | 3 शरस्तम्बे पतद्रेतो मिथुनं तदभूच्छुभम्। तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन्। कृपः कुमारः……——……— अथ सत्यधृतेः शुक्रं दृष्ट्वाप्सरसमग्रतः। — — — — — — | भा.पु. 9.21.36 | |
| | 4 ……तौ च मृगयामुपयातश्शान्तनुर्दृष्ट्वा कृपया जग्राह। ततः कुमारः कृपः—— | वि. पु. 4.19.67, 68 | |
| कृपावती | यस्मात्कृपाभिभूतस्य मम जातेयमात्मजा। तस्मात् कृपावती नाम्ना भविष्यत्याह स प्रभो ।। | मा. पु. 103.14 | – – |
| कृपी | 1 तस्माद् गौतमी च कृपी स्मृता। | हरि.1.32.73 | |
| | 2 द्रष्टव्यं-कृपः | वा.पु.उ.370.99 | |
| | 3 कन्या च द्रोणपत्न्यभवत् कृपी। | भा.पु. 9.21.36 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 तस्माद् गौतमी च कृपी तथा। | वा.पु.उ. 37.199 | |
| | 5 ·······कन्या चाश्वत्थाम्नो जननी कृपी द्रोणाचार्यस्य पत्न्यभवत्। | वि.पु. 4.19.67-68 | |
| कृष्णः❀ | 1 ·····योऽसौ वर्णतः कृष्ण उक्तः। | महा.1.189.31 | 3 12 |
| | 2 कृषिर्भूवाचकः शब्दो णश्चनिर्वृति-वाचकः। कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः॥ | महा. 5.68.5 | |
| | 3 कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णा-यसो महान्। कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन॥ | महा. 12.330.14 | |
| (व्यासः) | 4 कार्ष्ण्यात्कृष्णत्वमेव च। | महा. 1.105.14 | |
| (अर्जुनः) | 5 कृष्ण इत्येव दशमं नाम चक्रे पिता मम। कृष्णावदातस्य सतः प्रियत्वाद् बालकस्य वै॥ | महा. 4.39.20 | |
| | 6 कृषिस्तद्भक्तिवचनो नश्च तद्दास्य-वाचकः। भक्तिदास्यप्रदाता च कृष्ण इत्यभिधीयते॥ कृषिश्च-सर्ववचनो नकारो बीजवाचक। सर्वबीजं परब्रह्म कृष्ण इत्यभि धीयते॥ | ब्र. वै.-प्र. ख. 2 25, 26 | |
| | 7 कृष्णः वर्णः कलौ श्रीमान् तेजसां शशिरेव च। परिपूर्णतमं ब्रह्म कृष्णइत्यभिधीयते॥ सर्वेषां तेजसां राशिः सर्वमूर्तिस्वरूपकः। सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः॥ | ब्र. वै. कृ. ख. 13.56, 59 | |
| | 8 कृषिरुत्कृष्टवचनो णश्च सद्भक्ति-वाचकः। अश्चापि दातृवचनः कृष्णं तेन विदुर्बुधाः॥ कृषिश्च परमा-नन्दे णश्च तद्दास्यकर्मणे। तयो-र्दाता च यो देवस्तेन कृष्णः प्रकी-र्तितः॥ कोटिजन्मार्जिते पापे कृषिः क्लेशे च वर्तते। भक्तानां णश्च निर्वाणे तेन कृष्णः प्रकीर्तितः॥ | ब्र. वै. कृ. ख. 111.31-34 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 9 ब्रह्मण: वाचक: कोऽयमृकारोऽनन्त-वाचक:। शिवश्च वाचक: षश्च नकारो धर्मवाचक:। अकारो विष्णुवचन: श्वेतद्वीपनिवासिन:। नरनारायणार्थस्य विसर्गो वाचक: स्मृत: ।। | ब्र. वै. कृ. ख. 13.57-58 | |
| | 10 ककारोच्चारणाद्भक्त: कैवल्यं मृत्युजन्महम्। ऋकाराद्दास्यमतुलं षकाराद्भक्तिमीप्सितम् ।। नकाराद् सहवासं च तत्समं कालमेव च। तत्सारूप्यं विसर्गाच्च लभते नात्र संशय: ।। ककारोच्चारणादेव वेपन्ते यमकिङ्करा:। ऋकारोक्तेर्न तिष्ठन्ति षकारात्पातकानि च। नकारोच्चारणाद्रोगा अकारान्मृत्यु-रेव च। ध्रुवं सर्वे पलायन्ते नामो-च्चारणभीरव: ।। | ब्र. वै. कृ. ख. 13.66-69 | |
| | 11 कृषि र्निश्चेष्टवचनो नकारो भक्ति-वाचक:। अकार: प्राप्तिवचनस्तेन कृष्ण इति स्मृत: ।। | | |
| | कृषिर्निर्वाणवचनो नकारो मोक्ष-वाचक:। अकारो दातृवचनस्तेन कृष्ण इति स्मृत: ।। | ब्र. वै. कृ. ख. 13.61, 62 | |
| | 12 कर्मनिर्मूलवचनो कृषेर्नो दास्य-वाचक:। अकारो दातृवचनस्तेन कृष्ण इति स्मृत: ।। | तत्रैव 13.68 | |
| | 13 कृषिश्च सर्ववचनो नकारश्चात्म-वाचक:। सर्वात्मा च परं ब्रह्म तेन कृष्ण: प्रकीर्तित: ।। कृषिश्च सर्व-वचनो नकारश्चादिवाचक:। सर्वादिपुरुषो व्यापी तेन कृष्ण: प्रकीर्तित: ।। | ब्र. वै. ब्र. ख. 28.66, 67 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| कृष्णः (बलरामः) | 14 आसन् वर्णास्त्रयो यस्य गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ।। | भा. पु. 10.8.13 | – – |
| कृष्णः (कल्पः) | 15 यदाहं पुनरेवासं कृष्णवर्णो भयानकः । मत्कृतेन च वर्णेन संकल्पः कृष्ण उच्यते ।। | लि. पु. पू. 23.19 | – – |
| कृष्णा (द्रौपदी) | कृष्णेत्येवाब्रुवन् कृष्णां कृष्णाभूत्सा हि वर्णतः । | महा. 1.155.50 | – – |
| केतुमालः (द्वीपः) | केतुमालेति च यथा तस्या नाम प्रकीर्तितम् । तन्निबोधत विप्रेन्द्रा निरुक्तं नाम कर्मतः ।। तस्य केतोः सदा माला देवदत्ता विराजते । पवनेरिता दिव्यं वाति गन्धं मनोरमम् ।। ताभ्यां नामाङ्कितो द्वीपः पश्चिमे बहुविस्तरः । केतुमाल इति ख्यातो दिवि चेह च विस्तरः ।। | वा. पु. पू. 35.36, 40, 41 | – – |
| केदारः | वीटया तु पतन्त्याद्रिर्दारिता क्ष्मासमोऽभवत् । यावत्तीर्थवरः पुण्यः केदार इति विश्रुतः ।। | वामन. 60.70 | – – |
| केशवः❀ | 1 स चापि केशी हरिरुद्वबर्ह शुक्लमेकमपरं चापि कृष्णम् । —तयोः (देवकी-रोहिण्योः)………… कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ वर्णतः कृष्णः उक्तः ।। | महा. 1.189. 30-31 | 3 13 |
| | 2 सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत । अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः ।। सर्वज्ञाः केशवस्तस्मान्मामाहुर्द्विजसत्तमाः ।। | महा. 12.328.43 | – – |
| | 3 क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवांगसभूतौ तस्मात् केशव नामवान् ।। | हरि. 3.88.48 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 यस्मात्त्वया हत: केशी तस्मान्मच्छासनं शृणु । केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि ।। | तत्रैव 2.24.65 | – – |
| | 5 ······· केशव: केशिमर्दन:— | कू.पु.पू. 22.29 | |
| | 6 यस्मात् त्वयैप दुष्टात्मा हत: केशी जनार्दन । तस्मात् केशव नाम्ना त्वं लोके ख्यातो भविष्यसि ।। | वि. पु. 5.16.23 | |
| **केसरी (पर्वत:)** | तत: पर कौरवेन्द्र दुर्गशैलो महोदय: । केसरी केसरयुतो यतो वात: प्रवायति ।। | महा. 6.12.21 | – – |
| **कैटभ:**❀ | कठिन: कैटभोऽभवत् । | हरि. 1.52.25 | 4 15 |
| **कोविदार:**❀ | कोऽप्ययं दारुरित्याहुरजानन्तो यतो जना: । कोविदार इति ख्यातस्तत: स महातरु: ।। | तत्रैव 2.67.71 | 8 18 |
| **कौमोदकी** | देवैर्निगदितार्थस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमोदकी (ति) सा । | हरि. 2.35.65, 2.43.15 | |
| **कौर्म (पुराणं)** | कौर्मं कूर्मस्य चरितम् । | शि. पु. 5.44.134 | – – |
| **कौशाम्बी** | कुशाम्बस्तु महातेजा: कौशाम्बीमकरोत् पुरीम् । | वा. रा. बाल. 32.6 | – – |
| **कौशिक:** | 1 कुशवंशप्रसूतोऽस्मि कौशिक: । | वा.रा.बाल. 34.6 | – – |
| | 2 जातमात्रस्तु भगवान् अदित्यां स कुशैर्वृत: । तदाप्रभृति देवेश: कौशिकत्वमुपागत: ।। | हरि. | |
| **कौशिकी (देवी)** | 1 कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि । | हरि. 2.2.48 | |
| **(नदी)** | 2 शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलै: । यां तां पुण्यतमां लोके कौशिकीति विदुर्जना: ।। | महा. 1.65.30 | |
| | 3 विश्वामित्रस्य विपुला नदी······· कौशिकी । | महा. गी.प्रे.अनु. 3.10 | – – |
| | 4 सशरीरा गता स्वर्गं····कौशिकी सा प्रवृत्ता महानदी ।। | वा. रा. बाल. 34.8 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| क्रतुः | 1 क्रतौ तस्मिन् सुतो जज्ञे यतस्तस्मात् स वै क्रतुः । | वा. पु. उ. 4.44 | |
| | 2 क्रतुसंघश्च बालेन कृतो जन्मान्तरेऽधुना । ब्रह्मपुत्रोऽपि तन्नाम क्रतुरित्यभिधीयते ॥ | ब्र. वै. ब्र. ख. 22.7 | – – |
| क्रमरण: | क्रमरण: क्रमरणीयत्वात् । | लि.पु.पू. 70.105; वा.पु. 5.41 | – – |
| क्रव्याद: (अग्नि:) | 1 यस्माच्च दुर्हृत: सोऽयमलं भक्षयितुं क्षरणात् । यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्तत: ॥ | महा. आश्व. अपे. 1.4.2569-70 | – – |
| (अग्नि:) | 2 क्रव्यादोऽग्नि: सुतस्तस्य पुरुषानत्ति यो मृतान् । | वा.पु.पू. 29.35 | – – |
| (रुरु:) | 3 एवमेव महारौरवं यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति य: केवलं देहम्भर: । | भा. पु. 5.26.12 | |
| क्रौञ्च: (द्वीप:-पर्वतश्च) | 1 क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकर: । | महा. 6.13.7 | – – |
| | 2 यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिवर्तक आस्ते । | भा. पु. 5.20.18 | |
| (द्वीप:) | 3 मैनाकस्यानुज: क्रौञ्च: क्रौञ्चद्वीपो यत: स्मृत: । | वा.पु.पू. 30.32 | |
| | 4 — ··· क्रौञ्चस्तस्याग्रजोऽभवत् । क्रौञ्चद्वीप: स्मृतो येन चतुर्थो घृतसंवृत: ॥ | म. पु. 13.7 | |
| क्षत्रिय: | 1 क्षतान्नस्त्रास्य(य)ते सर्वानित्येवं क्षत्रियोऽभवत् । | महा.ग.द्रोण 69.2 | |
| | 2 क्षताच्च नस्त्रायतीति स (पृथु:) तस्मात्क्षत्रिय: स्मृत: । | महा.12.29.130 | |
| | 3 ब्राह्मणानां क्षतत्राणात् तत: क्षत्रिय उच्यते । | महा. चि. 12.59.126 | |
| | 4 इतरेषां कृतत्राणा: स्थापयामास क्षत्रियान् । | वा.पु.पू. 8.155 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 ससर्ज क्षत्रियांस्त्रातु क्षतात्कमलसम्भवः। | लि.पु पू. 39.49 | |
| | 6 क्षत्रजं सेवते कर्म ——स वै क्षत्रिय उच्यते। | ब्र.वै.कृ.ख. 83. (श. क.) | |
| | 7 क्षत्रियो यः क्षतत्राणं बध्यमानस्य दुर्मदैः। करोति तस्य तन्नाम —………………——॥ | मा. पु. 122.24 | |
| | 8 वर्तेत—……राजन्यो रक्षया भुवः। | भा. पु. 7.11.22 | |
| | 9 क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम्। वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम्॥ | वि. पु. 6.7.3 | |
| क्षरः | 1 यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत्। | महा. 12.291.12 | |
| | 2 कृत्स्नं (पाञ्चभौतिकं जगत्) एतावतस्तात क्षरते व्यक्तसंज्ञकम्। अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः॥ | महा. 12.291.34 | — — |
| | 3 क्षरतीदं जगत्। | महा. 12.291.35 | |
| | 4 नानात्वं क्षरमुच्यते। | महा. 12.293.47 | |
| | 5 तमेव च विकारं तु यस्माद्वै क्षरते पुनः। तस्माच्च कारणाच्चैव क्षरमित्यभिधीयते॥' | वा. पु. उ. 40,112, 113 | |
| | 6 कार्यकारणरूपं तु नश्वरं क्षरमुच्यते। | (श. क.) | |
| क्षितिः | महालये क्षयं याति। | ब्र.पु.प्र.ख. 9.31 | — — |
| क्षीरी | 1 अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः। ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमम्॥ | वा.पु.पू. 45.14 | |
| | 2 अपरे क्षीरिणो नाम वृक्षास्तत्र द्विजोत्तमाः। ये क्षरन्ति सदा क्षीरं तत्रपञ्चामृतोपमम्॥ | पद्म पु. स्वर्ग 4.5 | — — |
| क्षुपः | गर्भः क्षुवतोऽपतत्। स क्षुपो नाम संभूतः प्रजापतिः। (इक्ष्वाकुपिता) | महा. 12.122.16½ | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| क्षेत्रं | इदं शरीरं कौन्तेय क्षेत्रमित्यभि-धीयते । | गीता. 13.1<br>महा. 6.37.1 | |
| | 2 क्षीयते पातकं यत्र (यस्मात्) तेनेदं क्षेत्रमुच्यते । | स्क.पु.अवन्ती.1.23 | |
| | 3 क्षयणात् करणाच्चैव क्षतत्राणा त्तथैव च । भोज्यत्वाद्विषयत्वाच्च क्षेत्रं क्षेत्रविदो विदुः ।। | वा.पु.उ. 40.111 | |
| क्षेत्रजः | 1 क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेत-रेण वा । | अ. पु. 256.15 | – – |
| (व्यवहारः) | 2 सेतुकेदारमर्य्यादा विकृष्टाकृष्ट निश्चयाः । क्षेत्राधिकारे यत्र स्युर्विवादः क्षेत्रजस्तु सः ।। | अ. पु. 253.23 | |
| क्षेत्रज्ञः | 1 एतद् (क्षेत्रं=शरीरं) यो वेत्ति तं प्राहुः । क्षेत्रज्ञ इति तद्विदः । | गीता. 13.1<br>महा. 6.37.1 | – – |
| | 2 एवमाहुः समाहारं क्षेत्रमध्यात्म-चिन्तकाः । स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ।। | महा. 12.212.40-41 | |
| | 3 क्षेत्रज्ञः क्षेत्रविज्ञानात् । | वा.पु.पू.5.39; 59. 77; लि.पु.70.103 | |
| | 4 अव्यक्तं क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते । | मा. पु. 45.72 | |
| | 5 यस्मात्क्षेत्रं विजानाति तस्मात् क्षेत्रज्ञ उच्यते । क्षेत्रप्रत्ययतो यस्मात् क्षेत्रज्ञः शुभ उच्यते ।। | वा.पु.उ. 40.109 | |
| | 6 क्षेत्रज्ञात् क्षेत्रज्ञ उच्यते । | म. पु. 145.78 | – – |
| क्षोणी | क्षोणी क्षीणा लये च या । | ब्र.वै.प्र.ख. 9.31 | – – |
| खण्डपरशुः | क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा । ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् । | महा. 12.330.49 | – – |
| खरः | उवाच रक्षसां मध्ये खरः खरतरं वचः । | वा.रा.अरण्य 22.1 | – – |
| खलिनः | हता खलिनो (नामकः शत्रुः) यत्र स देशः खलिनोऽभवत् । | महा. गी. प्रे. अनु. 155.24 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| खलीकार: | उत्थितो योऽङ्घ्रिणानेन पार्ष्णिपादात् तुरङ्गमः। गृह्यते यत् खलीकृत्य खलीकारः स चेष्यते ।। | अ. पु. 288.46 | – – |
| खेचर: | अध्वानं सोऽतिचक्राम खेचरः खेचरन्निव । | महा. 12.312.16 | – – |
| ख्याति: | 1 ख्यातिः प्रत्युपभोगश्च यस्मात् संवर्तते ततः। भोगस्य ज्ञाननिष्ठत्वात्तेन ख्यातिरिति स्मृतः ।। | लि. पु. 70.19 वा. पु. पू. 4.32 | |
| | 2 ख्यायते तद्गुणैर्वापि ज्ञानादिभिरनेकशः। तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते ।। | लि. पु. 70.20 | |
| | 3 पाठभेदः—''''नामादिभिश्नेकशः। | वा. पु. पू. 4.33 | |
| | 4 ख्यायते या त्विति ख्यातिर्ज्ञानादिभिरनेकशः । | लि. पु. पू. 8.73 | – – |
| गङ्गा | 1 सङ्गमाद् गमनाद् गङ्गा। | दे. पु. 45/(श.क.) | |
| | 2 गां पृथ्वीं च गता यस्मात् स्वस्थानं पुनरागता। गां गता स्रोतसो यस्माद् गङ्गा तेन प्रकीर्तिता। | ब्र. वै. प्र. ख. 12.20; 34.21 | – – |
| गज: | गर्जनाद् गजः। | वा. पु. उ. 8.227 | – – |
| गणेश: | प्राणार्थवाचको गश्च णश्च निर्वाणवाचकः। तयोरीशं परब्रह्म गणेशं प्रणमाम्यहम् ।। | ब्र. वै. ग. ख. 44.87 | – |
| गणेश्वर: | ससर्ज च तदा विघ्नगणं गणपतिः प्रभुः। गणैः सार्धं नमस्कृत्वाऽभ्यतिष्ठत्तस्य चाग्रतः। तदा प्रभृति लोकेऽस्मिन् पूजयन्ति गणेश्वरम् ।। | लि. पु. पू. 105.29 | – – |
| गण्डा | 1 गण्डं गण्डं गतवती गण्डगण्डेति संज्ञिता। गण्डगण्डेव गण्डेति विद्धि मानलसम्भवे ।। | महा. 13.95.41 | – – |
| | 2 वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते। तेनोन्नतेन गण्डेति विद्धि मानलसम्भवे ।। | तत्रैव अनु. 93.98 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| गदाधरः | दधार तां गदामादौ देवैरुक्तो गदाधरः । गदया हेतिमाहत्य देवैः स त्रिदिवं ययौ ।। गदामादाववष्टम्भ्य गयासुरशिरःशिवम् । निश्चलार्थः स्थितो यस्मात्तस्मादादि-गदाधरः ।। | वा. पु. उ. 47.12-14 | – | – |
| गदावसानं | दृष्ट्वा पौरैस्तदा सम्यग् गदां चैव निवेदिता । गदावसानं तत्ख्यातं मथुरायाः समीपतः ।। | महा.ग.2.19.26 | – | – |
| गद्यं | अपदः पदसन्तानो गद्यं तदपि गद्यते । | अ. पु. 337.9 | – | – |
| गन्धर्वः | 1 धयतीत्येष वै धातुः पानत्वे परि-पठ्यते । धयन्तो जज्ञिरे वाचं गन्ध-र्वास्तेन ते स्मृताः ।। | लि. पु. 70.234 | | |
| | 2 धयन्तो गास्ततस्तस्य गन्धर्वा जज्ञिरे तदा । ध्यायतीत्येष धातुर्वै पानार्थे परिपठ्यते । पिबतो जज्ञिरे गास्तु गन्धर्वास्तेन ते स्मृताः ।। | वा.पु.पू. 9.36 | | |
| | 3 गायतोऽङ्गात्समुत्पन्नाः गन्धर्वा-स्तस्य तत्क्षणात् । | वि. पु. 1.5.46 | | |
| | 4 ध्यायतो गां ततस्तस्य गन्धर्वा जज्ञिरे सुताः । जज्ञिरे पिबतो वाचं गन्धर्वास्तेन ते स्मृताः ।। | मा. पु. 48.24 | – | – |
| गन्धवती | 1 तेन गन्धवतीत्येव नामास्याः प्रथितं भुवि । (वरस्वरूपं सुगन्धं पराशरात् प्राप्तम्) | महा. 1.57.66 | – | – |
| | 2 तस्या उत्तरे भागे वायोरपि महा-पुरी । नाम्ना गन्धवती पुण्या तत्रास्तेऽसौ प्रभञ्जनः ।। | कू.पु.पू. 46.21 | | |
| गया | 1 दिग्पूर्वा भरतश्रेष्ठ गयस्य तु गयापुरी । | हरि. 1.10.19 | | |
| | 2 गयापुरीति मन्नाम्ना ख्याता ब्रह्मपुरी यथा । | वा.पु.उ. 50.10 | – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 3 गयोऽपि चाकरोद्यागं बह्वन्नं बहु-दक्षिणाम् । गयापुरी तेन नाम्ना पाण्डवा ईजिरे हरिम् ॥ | अ. पु. 114.41 | | |
| गयाशिर: | मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता । मुण्डपृष्ठे शिर: साक्षाद् गयाशिर उदाहृतम् । साक्षाद् गयाशिरस्तत्र फल्गुतीर्थाश्रमं कृतम् ॥ | अ.पु. 115.43, 44 | -- | -- |
| गरुड:ॐ | गुरुं भारं समासाद्योड्डीन एष विहंगम: । गरुडस्तु खगश्रेष्ठस्तस्मा-त्पन्नगभोजन: ॥ | महा. 1.26.3 (पा. टि. 243) | 8 | 22 |
| गर्गस्रोत: | यत्र गर्गेण वृद्धेन तपसा भावितात्मना । ....उत्पाता दारुणाश्चैव शुभाश्च.... सरस्वत्या: शुभे तीर्थे विहिता वै महात्मना । तस्या नाम्ना च यत्तीर्थं गर्गस्रोत इति स्मृतम् ॥ | महा. 9.36.15-16 | | |
| गानबन्धु: | उलूकं पश्य गत्वा त्वं यदि गाने रता मति: । मानसोत्तरशैले तु गानबन्धु-रिति स्मृत: ॥ | लि. पु. उ. 2.7 | – | – |
| गान्दिनी ॐ | 1 गान्दिनीं नाम तस्याश्च सदा गा: प्रददौ पिता । | हरि. 1.38.50 | 6 | 7 |
| | 2 गान्दिनीं नाम गां सा हि ददौ विप्राय नित्यश: । | म. पु. 34.105<br>वा. पु. 58.105 | | |
| | 3 यदि दत्ता तदा स्यां हि यदि स्यामीहतां पित: । | म. पु. 34.108 | | |
| | 4 नाम यद्येकैकां गां दिने ब्राह्मणाय प्रयच्छसि यदाऽहमन्यैस्त्रिभिर्वर्षैर-स्माद् गर्भात्तावदवश्यं निष्क्रमिष्या-मीत्येतद्वचनमाकर्ण्य राजा दिने दिने ब्राह्मणाय गां प्रादात्........ ततस्तस्या: पिता गान्दिनीति नाम चकार । | वि. पु. 4.13.117-124 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| गान्दी❀ | गान्दी तस्याथ गान्दीत्वं सदा गाः प्रददौ हि सा —पाठभेदः | हरि. 1.38.50 (पा. टि.) | 6 | 7 |
| गान्धारी | गान्धारराजस्य दुहिता कुलशालिनी। गान्धारी—……… | हरि. 2.98.48 | – | – |
| गायत्री | 1 गायन्छिष्यान् यतस्त्रायेद् भार्यां प्राणांस्तथैव च। ततः स्मृतेयं गायत्री……… | अ. पु. 216.1 | | |
| | 2 गायनाद् गमनाद् वापि गायत्री। | देवी. पु. 37.54 | – | – |
| गारुडं (पुराणं) | गरुडस्तु स्वयं वक्ता यत्तद् गारुड-संज्ञकम्। | शि. पु. 5.44 | – | – |
| गार्हपत्यं | गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम्। गृहपत्यं तु यस्यासीत्तस्यासीद् गार्हपत्यता॥ | महा. आश्व. अपे. 1.4.2590½ | | |
| गालवः❀ | 1 सोऽभवद् गालवो नाम गलबन्धा-न्महातपाः। | हरि. 1.12.24 | 5 | 6 |
| | 2 सोऽभवद् गालवो नाम गले बद्धो महातपाः। | वा.पु.उ. 26.90 | | |
| | 3 सोऽभवद् गालवो नाम गले बध्नन् महातपाः। | ब्रह्म. 7.109; ब्र.पु. 2.63.89 | | |
| गिरिः | गिरयोऽन्तर्निगीर्णत्वात्। | वा. पु. पू. 6 30 | | |
| गुरुः | गुकारस्त्वन्धकारार्थो रुकारस्तन्नि-रोधकः। अन्धकारनिरोधित्वाद् गुरु-रित्यभिधीयते॥ | ब्र. पु. 4.43.37 | – | – |
| गुहः | 1 गुहावासाद् गुहोऽभवत्। | महा.गी.प्रे.अनु. 85.82; 86 14 | – | – |
| | 2 सर्वगुह्यमयो गुहः। | महा. 1.127.13 | – | – |
| गूढजः | गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। | अ. पु. 256.16 | – | – |
| गृध्रकूटः | 1 शिलाया वामहस्तेऽपि गृध्रकूटो गिरिर्धृतः। गृध्ररूपेण संसिद्धा-स्तपस्तप्त्वा महर्षयः॥ | | – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 2 अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः स्थितः । दृष्ट्वा गृध्रेश्वरं नत्वा यायाच्छम्भोः पदं नरः ।। | वा. पु. पू. 46.64, 65 | | |
| गृहपतिः (अग्निः) | 1 स्थालीपाकं च गार्हं च सर्वे ह्यस्मिन्प्रतिष्ठिताः । गृह्यकर्मवहो यस्मात्तस्मात् गृहपतिस्तु सः ।। | महा. आश्व. अपे. 1.4.2584-85 | – | – |
| | 2 अजैकपादुपस्थेयः स वै शालामुखीयकः । अनुद्देश्योऽप्यहिर्बुध्न्यः सोऽग्निर्गृहपतिः स्मृतः ।। | वा.पु.पू. 29.24 | | |
| गोकर्ण | 1 सवृषं गोशतं यत्र सुखं तिष्ठत्ययन्त्रितम् । सवत्सं कुरुशार्दूल तच्च गोकर्णमुच्यते ।। | महा. आश्व. अपे. 1.4.1083-84 | – | – |
| | 2 तदाप्यहं भविष्यामि गोकर्णो नाम नामतः । तस्माद् भविष्यते पुण्यं गोकर्णं नाम तद्वनम् । | वा.पु.पू. 23.16 | | |
| गोतम.❀ | गोदमो दमतो धूमो दमस्ते समदर्शनात् । विद्धि मां गोतमं कृत्ये······· ।। | महा. 13.95.33; गी.प्रे.अनु. 93.90 | 5 | 7 |
| गोपतिः | गोपतिर्नाम नामतः वने संरक्षितो गोभिः·······। | महा. 12.49.65 | – | – |
| गोपव्यूहः | गोपव्यूहः समाख्यातो गोपायी व्यूह उच्यते। | लि.पु.उ. 27.207 | | |
| गोमती | गोमतीं गोयुतानूपां··· ·· ····। | वा.रा.अयो.49.11 | – | – |
| गोवर्धनः | गां वर्धयति नित्यं यस्तेन गोवर्धनः स्मृतः । | ब्र. वै. कृ. ख. 21.86 | | |
| गोविन्दः❀ | 1 गोविन्दो वेदनाद् गवाम् । | महा. 5.68.13 | – | – |
| | 2 नष्टां च धरिणीं पूर्वमविन्दं वै गुहागताम् । गोविन्द इति मां देवा वाग्भिः समभिस्तुष्टुवुः ।। | महा.12.330.5 | 3 | 14 |
| | 3 गां विन्दता भगवता गोविन्देनामितौजसा । | महा. 1.19.12 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 गोरेषा तु यतो वाणी तां च वेद यतो भवान् । गोविन्दस्तु ततो देव मुनिभिःकथ्यते भवान् ॥ | हरि. 3.88.50 | |
| | 5 अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकस्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥ | तत्रैव 2.19.85 | |
| | 6 युगे युगे प्रणष्टां गां विष्णो विन्दसि तत्त्वतः । गोविन्देति ततो नाम्ना प्रोच्यते ऋषिभिस्तथा ॥ | म.पु.248.44 ब्र.वै.प्र.ख.24. | |
| | 7 स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्य-प्रचोदितः । उपेन्द्रत्वे गवामिन्द्रो गोविन्दस्त्वं भविष्यसि ॥ | वि.पु. 5.12.12 | – – |
| गौतमः | जरां मृत्युं तमश्चैव आघ्रायापनुदामि ते । गोभ्याहृते तमसि वै गौतमस्तु ततोऽभवत् ॥ | म.पु. 48.84 | – – |
| (वनं) | 2 वंशे त्वङ्गिरसः श्रेष्ठो गौतमो नाम योगवित् । तस्माद् भविष्यते पुण्यं गौतमं नाम तद्वनम् ॥ | वा.पु.पु.23.152 | |
| | 3 यस्मात्तव तमो दीर्घं निस्तुदाम्यद्य पश्य वै । गवा दीर्घतमः सोऽथ गौतमः समपद्यत ॥ | वा.पु.पू. 37.90,92 | – – |
| ग्रहः | तेन ग्रहागृहाण्येव तदाख्यास्ते भवन्ति च । | लि.पु.पू, 61.9 | |
| घटोत्कचः❀ | घटो ह्यस्योत्कच इति माता तं प्रत्यभाषत । अब्रवीत् तेन नामास्य घटोत्कच इति सा ह ॥ | महा.ग.1.157. 38; चि.1.155. 38 | 4 16 |
| घातकीखंडः | 1 नाम्ना तु घातकेश्चैव घातकीखण्ड-मुच्यते । | लि.पु.पू. 46/23 | |
| | 2 नाम्ना वै घातकेश्चापि घातकी-खण्ड उच्यते । घटमासोत्कच-इति पाठभेदः । | कू.पु.पू. 40.15 महा.1.143.34 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| धृतार्चिः | घृतं ममार्चिषो लोके जन्तूनां प्राणधारणम् । घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः ।। | महा. 12.33020 | -- |
| घ्राणं | जिघ्रतो भवति घ्राणं बुद्धिर्विक्रियते पृथक् ।। | महा. 12.240.5 | -- |
| चक्रवान् | चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः । तत्र चक्रं सहस्रारं ---- | वा.रा.कि. 42.27 | -- |
| चक्षुः | येनेदं वीक्षते····वक्ति·········न चक्षुर्विद्यते ह्येतत् । स वै भूतान्ध उच्यते । | महा.गी.प्रे. क्षेपक 4990 | |
| चण्डव्यूहः | चण्डव्यूहः समाख्यातश्चण्डव्यूहस्तथोच्यते । | लि. पू.उ. 27.144 | -- |
| चतुर्भुजः | तां दिदृक्षुरहं योगाच्चतुर्मूर्तित्वमागतः । चतुर्मुखश्च संवृत्तः········। | महा.गी.प्रे.अनु. 141.4 | -- |
| चतुर्व्यापी | कर्तारं साक्षिणश्चैव सत्यान् राजानमेव च । व्याप्नोति पादजो यस्माच्चतुर्व्यापी ततः स्मृतः ।। | अ.पु.253.7 | -- |
| चतुष्कारी | धर्मस्वार्थस्य यशसो लोक पङ्क्त स्तथैव च । चतुर्णां करणादेष चतुष्कारी प्रकीर्तितः ।। | अ.पु. 253.8 | -- |
| चतुःसाधनं | सामाभ्युपाय साध्यत्वाच्चतुःसाधन उच्यते । | अ.पु. 253.8 | |
| चतुर्व्यूहः | चतुर्धा प्रविभक्तत्वाच्चतुर्व्यूहः प्रकीर्तितः | लि.पु.70.95 | |
| चतुर्हितः | चतुर्णामाश्रमाणाञ्च रक्षणात् स चतुर्हितः । | वा.पु.5.31 अ.पु.253.6 | |
| चन्द्रकान्ता | चन्द्रकेतोऽस्तु मल्लस्य मल्लभूम्यां निवेशिता । चन्द्रकान्तेति विख्याता । | वा.रा. उत्तर 102.9 | |
| चन्द्रावती | तस्माच्छैलान्महापुण्या चन्द्रांशुविमलोदका । प्रवहत्युत्तमनदी चन्द्रावती तरङ्गिणी ।। | वा.पु.पू.45.56 | |
| चरकः | ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः । वैशम्पायन-शिष्यास्ते चरकाः समुदाहृताः ।। | वा.पु.पू.61.23 | -- |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| चरकाध्वर्यु: | ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः । चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम ।। | वि.पु. 3.5.13 | |
| चर्मण्वती | 1 महानदी चर्मराशेरुत्क्लेदात् सश्रुवे यतः। ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ।। | महा. 12.29.116 | 8 12 |
| | 2 नदी महानसाद् यस्य (रन्तिदेवस्य) प्रवृत्ता चर्मराशितः । तस्माच्चर्मण्वती पूर्वमग्निहोत्रेऽभवत् पुरा ।। | महा.ग.द्रोण 67.5 | |
| | 3 रन्तिदेवस्य यज्ञे ताः (गावः) पशुत्वेनोपकल्पिताः । अतश्चर्मण्वती राजन् गोचर्मभ्यः प्रवर्तिता ।। | महा.गी.प्रे.अनु. 66.43 | |
| | 4 चर्मणां पर्वतो जातो विन्ध्याचलसमः पुनः । मेघाम्बुप्लावनाज्जाता नदी चर्मण्वती शुभा ।। | दे.भा. 1.18.54 | – – |
| चाक्षुष: (मन्वन्तर:) | 1 अन्यजन्मनि जातोऽसौ चक्षुषः परमेष्ठिनः । चाक्षुषत्वमतस्तस्य जन्मन्यस्मिन्नपि द्विज ।। | मा.पु. 76.2 | |
| | 2 चक्षुषेत्याहृतं ब्रह्मा तपसो विनिववर्तयन् । पूर्वं नाम्ना बभूवाथ प्रख्यातश्चाक्षुषो मनुः ।। | मा.पु. 76.46 | |
| चामुण्डा | यस्माच्चण्डं च मुण्डञ्च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवि भविष्यसि ।। | मा.पु. 7.27 | – – |
| चिति: | 1 ज्ञानादीनि च रूपाणि बहुकर्मफलानि च । चिनोति यस्माद् भोगार्थं तेनासौ चितिरुच्यते ।। | लि.पु. 70.22 | |
| | 2 सर्वकर्माणि भोगार्थं यच्चिनोति चितिः स्मृता । | लि.पु.पू. 8.72 | |
| | 3 ज्ञानादीनि च रूपाणि क्रतुकर्मफलानि च । चिनोति यस्माद् भोगार्थं तेनासौ चितिरुच्यते ।। | वा.पु.पू. 4.35 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| चित्रभानु: | चित्रा हि भानवो यस्य वर्णैः शुक्लादिभिर्यतः । भानवो रश्मयः प्रोक्ताश्चित्रभानुस्ततः स्मृतः ।। | साम्ब.पु.8.21 | |
| चित्ररथः❀ | अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः । सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ।। (अहं=अंगारपर्णो गन्धर्वः) | महा. 1.158.37 | 48 |
| चित्रलेखा | यस्मात्त्वया चित्रवच्च लिखिता पृथिवी शुभे । चित्रलेखेति नाम्ना त्वं तस्माद्भव सखी मम ।। | स्कन्द पु.1.39.179 | -- |
| चित्राश्वः | बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृण्मयान् । चित्रेऽपि च (वि) लिखत्यश्वांश्चित्राश्व इति चोच्यते । | महा. 3.278.13 | -- |
| चिन्तकः (कल्पः) | ध्यायतो ब्रह्मणश्चैव यस्माच्चिन्ता समुत्थिता । तस्मात्तु चिन्तकः सो वै कल्पः प्रोक्तः स्वयम्भुवा ।। | वा.पु.पू.21.49 | |
| चिरकारी | 1 चिरं हि सर्वकार्याणि समेक्षावान् (विमृष्यार्थान्) प्रपद्यते । चिरं संचिन्तयन्नर्थांश्चिरं जाग्रच्चिरं स्वपन् ।। चिरकार्याभिसंपत्तेश्चिरकारी तथोच्यते ।। | महा. 12.258. 4.5 | -- |
| | 2 चिरमाशंसितो मात्रा चिरं गर्भेण धारितः । सकलं चिरकारित्वं कुरु त्वं चिरकारिक । | महा. 12.258.54 | |
| | 3 चिरायते च सन्तापाच्चिरं स्वपिति वारितः । आवयोश्चिरसंतापादवेक्ष्य चिरकारिकः ।। | महा. 12.258.55 | |
| चैद्यः | 1 चेदिः पुत्रः कौशिकस्य तस्माच्चैद्या नृपाःस्मृताः । | हरि. महा. 1.36.22 | -- |
| | 2 कौशिकस्य चिदिः पुत्रः तस्माच्चैद्याः नृपाः स्मृताः । चोदयात् प्रेरयेद् बुद्धीर्भक्तॄणां सर्वकर्मसु । | अ.पु.275.18 अ.पु.216.13 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| चोल: | कान्तिपुर्यां पुरा चोलश्चक्रवर्ती नृपोऽभवत् । यस्य नाम्ना च ते देशाश्चोलाख्या अभवन् किल ॥ | पद्म. पु.उ.ख.108.5 | – – |
| च्यवन:⚘ | 1 तत: स गर्भो निवसन् कुक्षौ भृगुकुलोद्वह । रोषान्मातश्च्युत: कुक्षेश्च्यवनस्तेन सोऽभवत् ।. | महा. 1.6.2 | 5 8 |
| | 2 च्यवनाच्च्यवनं प्राहु: सर्वे तत्र तपस्विन: । शनै: शनै: स ववृधे शुक्लप्रतिपदिन्दुवत् ॥ | पद्म.पु.पा.ख.14.45 | |
| जटोदका | यस्माज्जटोदकादेव प्रवृत्ता त्वं महानदी । तस्माज्जटोदका पुण्या भविष्यसि सरिद्वरा ॥ | लि.पु.पू.43.35 | |
| जनक: | 1 अरण्यां मथ्यमानायां प्रादुर्भूतो महातपा: । जननाज्जनकोऽभवत् । | वा.रा.उत्तर 57.19 | |
| | 2 जननाज्जनकसंज्ञां चावाप । | वि.पु.4.55.22 | |
| | 3 जननाज्जनकोऽभवत् । | वा.पु.उ.27.46.28.5 | |
| | 4 जनको जन्मदाता च । | ब्र.वै.ग.ख.54 | |
| जननी | जननाज्जननी स्मृता । | महा.12.258.30 | – – |
| जनार्दन: | दस्युत्रासाज्जनार्दन: । | 5.68.6 | – – |
| जन्तुधना | इयं जन्तुधना नाम कन्या सर्वाङ्ग-सुन्दरी । जन्तवोऽस्या धनाहारास्तावच्छ्रावयतां धनम् ॥ | वा.पु.उ.8.119 | – – |
| जप्येश्वर: | अन्यच्च तीर्थप्रवरं जप्येश्वरमिति श्रुतम् । जजाप रुद्रमनिशं यत्र नन्दी महागण: । | कू.पु.उ.43.17 | – – |
| जमदग्नि:⚘ | 1 जाजमद्यजजानेऽहं जिजाहीह जिजायिषि । जमदग्निरिति ख्यातस्ततो मां विद्धि शोभने ॥ | महा.13.95.23 गी.प्रे.अनु.93.94 | 5 9 |
| | 2 तपस्याभिरतं दान्तं जमदग्निं शुभात्मकम् । भृगोश्चरुविपर्यासे रौद्रवैष्णवयो: पुरा । यमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ॥ | वा.पु.उ.29.83 | |
| जम्बुकेश: | पुरा जम्बुकरूपेण असुरो देवकण्टक: । ब्रह्मणो हि वरं लब्ध्वा गोमायुर्बध- | | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | शङ्कितः । निहतो हिमवत्पुत्रि जम्बुकेशस्ततो ह्यहम् ॥ | लि.पु.पू.92.96 | |
| जम्बूद्वीपः | 1 स केतुर्दक्षिणे द्वीपे जम्बूर्लोकेषु विश्रुता । यस्या नाम्ना स विख्यातो जम्बूद्वीपः सनातनः ॥ | वा.पु.पू.35.32 | — — |
| | 2 सुदर्शनो नाम महाञ्जम्बूवृक्षः सनातनः ।......... तस्य नाम्ना समाख्यातो जम्बूद्वीपे वनस्पतिः ॥ | वा.पु.पू.46.25 | |
| | 3 तस्य जम्बूनदी नाम मूलमावेष्ट्य च संस्थिता । तस्य दक्षिणपार्श्वे तु जम्बूवृक्षः सुशोभनः——— तत्र जम्बूफलाहाराः केचिच्चामृतभोजनाः । जाम्बूनदसमप्रख्या नानावर्णाश्च भोगिनः ॥ | लि.पु.पू.48.30.38 | — — |
| जया | जयकल्याणवचनो याकारो दातृवाचकः । जयं ददाति या नित्यं सा जया परिकीर्तिता ॥ | ब्र.वै.कृ.ख.27.36 | — — |
| जरत्कारुः | जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम् । शरीरं कारु तस्यासीत् तत् स धीमान् शनैःशनैः । क्षपयामास तीव्रेण तपसेत्यत उच्यते । जरत्कारुरिति ब्रह्मन् वासुकेर्भगिनी तथा ॥ | महा.1.36.3,4 | — — |
| जरासन्धः | 1 शकले द्वे स वै जातो जरया सन्धितः सुतः । जरया सन्धितो यस्माज्जरासन्धस्ततः स्मृतः ॥ | हरि. 1.32.97 | |
| | 2 तस्य नामाकरोत्तत्र प्रजापतिसमः पिता । जरया सन्धितो यस्माज्जरासन्धस्ततोऽभवत् ॥ | महा. 2.17.6 | |
| | 3 द्वाभ्यां जातो हि मातृभ्यामर्धदेहः पृथक् पृथक् । तया स सन्धितो यस्माज्जरासन्धस्ततः स्मृतः ॥ | महा. 7.156.13 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 द्वे तस्य शकले जाते जरया सन्धित-श्च सः । जरया सन्धितो यस्माज् जरासन्धस्ततः स्मृतः ।। | म.पु.50.32 | |
| | 5 अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् । ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते । जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ।। | भा.पु.9.22.78 | |
| | 6 शकले द्वे स वै जातो जरया सन्धितस्तु सः । जरासन्धो महा-बाहुर्जरया सन्धितस्तु सः ।। | वा.पु.उ.37.221 | |
| | 7 बृहद्रथाच्चान्यश्शकलद्वयजन्मा । जरया संहितो जरासन्धनामा । | वि.पु.4.19.83 | |
| जलदः | जलद जलदस्याथ वर्षं प्रथममुच्यते । | कु.पु.पू.40.17 | — — |
| जलन्धरः | जलन्धर इति ख्यातो जलमण्डल-सम्भवः । | लि.पु.पू.97.2 | — — |
| जातरूपं | निक्षिप्तमात्रे गर्भे तु तेजोभिर-भिरंजितम् । सर्वपर्वतसन्नद्धं सौवर्णम-भवद् वनम् । जातरूपमिति ख्यातं तदाप्रभृति राघव । सुवर्ण····— | वा.रा.बाल. 37.21.22 | — — |
| जातवेदाः ※ | 1 वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि । | महा. 2.28.29. | 3 15 |
| | 2 तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः । त्रय्या च विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ।। | भा.पु.9.14.46 | |
| जाम्बवान् | पूर्वमेव मया सृष्टो जाम्बवानृषि-पुंगवः । जृम्भमाणस्य सहसा मम (ब्रह्मणः) । | वा.रा.बाल. 17.7 | — — |
| जाया※ | 1 भार्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः । जायाया इति जायात्वं पुराणाः कवयो विदुः ।। | 1.68.36 | 7 5 |
| | 2 आत्मा हि जायते तस्यां तस्मा-ज्जाया भवत्युत ।। | तत्रैव 3.13.62 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 आत्मा हि जायते तस्य तेन जायां विदुर्बुधाः ॥ | महा.ग.विराट. 31.41 | |
| जाह्नवी | द्रं–जह्नुसुता । | वा.रा.बाल. 43.40 | – – |
| | 1 ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्पुनः । तस्माज्जह्नुसुता गंगा प्रोच्यते जाह्नवीति च ॥ | वा.रा.बाल. 43.40 | – – |
| | 2 दुहितृत्वमनुप्राप्ता गंगा यस्य (जह्नोः) महात्मनः । | महा.गी.प्रे.अनु. 4.3 | – – |
| | 3 राजर्षिणा ततः पीता गंगा दृष्ट्वा महर्षयः । उपनिन्युर्महाभागो दुहितृत्वेन जाह्नवीम् ॥ | हरि. 1.27.8 तु. तत्रैव 1.32.47 | – – |
| | 4 जानुद्वारा पुरा दत्त्वा जह्नुः संपीय कोपतः । जह्नुकन्यास्वरूपा सा जाह्नवी तेन कीर्तिता । | ब्र.वै.कृ.ख.34.22 | |
| जिष्णुः | 1 (विष्णुः) जयनाज्जिष्णुरुच्यते । | महा.5 68.13 | – – |
| | 2 अहं दुरापो दुर्धर्षो दमनः पाकशासनिः । तेन देवमनुष्येषु जिष्णुनामासि विश्रुतः ॥ | महा. 4.39.19 | |
| ज्ञानं | चेतनाचेतनान्यत्वविज्ञानं ज्ञानमुच्यते | लि.पु.पू.10.29 | |
| | ज्ञानात्तु ज्ञानमित्याहुः भगवान् ज्ञानसन्निधिः । | वा.पु.पू.4.39 | |
| ज्योतिषं | ज्योतिषामयनं साक्षाद् यत्तज्ज्ञानमतीन्द्रियम् । प्रणीतं भवता येन पुमान् वेद परावरम् ॥ | भा.पु.10.8.5 | |
| ज्वरः | यश्चैष पुरुषो जातः स्वेदात्ते (शिवस्य)....। ज्वरो नामैष धर्मज्ञा लोकेषु प्रचरिष्यति ॥ | महा. 12.274.45 | – – |
| तक्षशिला | 1 तक्षं तक्षशिलायाम् । | वा.रा.उत्तर 101.11 | – – |
| | 2 तक्षस्य दिक्षु विख्याता रम्या तक्षशिला पुरी । | तत्रैव26.189 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| तनुः (अम्भः) | तदम्भस्तनुते यस्मात् सर्वां पृथ्वीं समन्ततः । धातुस्तनोति विस्तारे तेनाम्भस्तनवः स्मृताः ॥ | वा.पु.पू. 7.51 | — — |
| तन्मात्रा | तस्मिंस्तस्मिंश्च तन्मात्रं तेन तन्मात्रता स्मृता ॥ | लि.पु. 70.36<br>वा.पु.पू. 4.52 | — — |
| तपः | 1 प्रतापस्तपसो ज्ञानं लोके संशब्दितं तपः । | महा. 12.210.16 | — — |
| | 2 व्रतं हि कर्तृसन्तापात्तप इत्यभिधीयते । | अ. पु. 175.3 | |
| तपस्वी (विष्णुः) | तपश्चरसि यस्मात्त्वं तपस्वीति च शब्दितः ॥ | हरि. 3.88.52½ | – – |
| तातः | तातो विस्तीर्णकरणात् । | ब्र.वै ग.ख. 54. | |
| तापत्यः | तस्यां तं जनयामास कुरुं संवरणो नृपः । तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ | महा. 1.163 23 | – – |
| तामसः (मनुः) | तामसी भजमानायां योनिं मातर्यजायत । तमसा चावृते लोके तामसोऽयं भविष्यति ॥ | मा.पु. 74.48 | – – |
| तामिस्रः | तमोमोहः महामोहस्तामिस्रः क्रोधसंज्ञितः । मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते ॥ | महा. 14.36.33 | – – |
| तारकः (नक्षत्रं) | 1 तारणात्तारका ह्येताः शुक्लत्वाच्चैव तारकाः । | लि.पु.पू. 61.2,<br>म.पु. 128.56 | – – |
| (हिरण्यगर्भः) | 2 तारणात्सर्वदुःखानां तारकः परिगीयते । | कू.पु.पू. 4.65 | |
| तारकामयः | 1 तद् युद्धमभवत्प्रख्यातं तारकामयम् । | हरि. 1.25.35 | — — |
| | 2 सुरासुरविनाशोऽभूत् समरस्तारकामयः। | भा. पु. 9.14.7 | — — |
| तारेयः | तारेयो राम भवता रक्षणीयो महाबलः । | वा.रा.कि.18.53 | — — |
| तालजङ्घः | 1 तस्य (तालजंघस्य) पुत्राः शतं ख्यातास्तालजंघा इति श्रुताः । | हरि. 1.33.51,<br>भा.पु. 9.13.28 | – – |
| | 2 शतं पुत्रास्तु तस्येह तालजङ्घाः प्रकीर्तिताः । | लि.पु.पू 68.13 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| तिर्यक्स्रोत: | 1 यस्मात्तिर्यक्प्रवृत्तिस्स तिर्यक्स्रोतास्ततः स्मृतः । | वि.पु. 1.5.9<br>मा.पु. 47.19 | | |
| | 2 तिर्यक्स्रोतस्तु यः प्रोक्तस्तैर्यग्योन्यस्ततः स्मृतः । | अ. पु. 20.3 | | |
| | 3 तस्मात्तिर्यक्प्रवृत्तः स तिर्यक्स्रोतास्ततः स्मृतः । | लि.पु. 70.142<br>कू.पु.पू. 7.6 | | |
| | 4 तस्मात्तिर्यग् व्यवर्त्तत तिर्यक्स्रोतस्ततः स्मृतः । | वा.पु.पू. 6.39 | – | – |
| तिलोत्तमा❀ | तिलं तिलं समानीय रत्नानां यद्विनिर्मिता । तिलोत्तमेत्यतस्तस्या नाम चक्रे पितामहः ।। | महा. 203.17<br>तु. 13.128.1 | 4 | 2 |
| तुलसी | 1 यस्याः देव्याः तुला नास्ति विश्वेषु निखिलेषु च । तुलसी तेन विख्याता तां यामि शरणं प्रियाम् ।। | ब्र.वै.प्र.ख. 22.24 | | |
| | 2 नरा नार्यश्च तां दृष्ट्वा तुलनां दातुमक्षमाः । तेन नाम्ना च तुलसी तां वदन्ति पुराविदः ।। | ब्र.वै.प्र.ख. 15.15 | | |
| तेजोवती | तेजोवती नाम पुरी दिव्याश्चर्यसमन्विता । तत्रास्ते भगवान् वह्निर्भ्राजमानः स्वतेजसा ।। | कू.पु.पू. 46.14 | – | – |
| तैत्तिरीयः | 1 यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज । जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ।। | वि.पु. 3.5.12 | – | – |
| | 2 यजूंषि तित्तिरा भूत्वा तल्लोलुपतया ददुः । तैत्तिरीया इति यजुः शाखा आसन् सुपेशलाः ।। | भा.पु. 12.6.65 | – | – |
| त्यागः | 1 सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः । | महा. 6.40.2<br>(गीता 18.2) | – | – |
| | 2 कुशलाकुशलानाञ्च प्रहाणो त्याग उच्यते । | वा.पु.पू. 59.53 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| त्रसदस्यु: | त्रसदस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै । यस्मात् त्रसन्ति ह्युद्विग्ना: दस्यवो लवणादय: ।। | भा.पु. 9.6.33 | – – |
| त्रिककुत् | 1 तथैवासं त्रिककुदो वाराहं रूपमास्थित: । त्रिककुत्तेन विख्यात: शरीरस्य तु मापनात् ।। | महा. 12.330.28 | |
| | 2 कैलासात्पश्चिमोदीच्यां ककुद्मानोपधी गिरि: । ककुद्मति च रुद्रस्य उत्पत्तिश्च ककुद्मिन: । तदञ्जनं त्रैककुदं शैलं त्रिककुदं प्रति ।। | म.पु. 121.15 | — — |
| त्रिगुण: | 1 त्रिधा यद्वर्तते लोके तस्मात्त्रिगुण उच्यते । | लि.पु. 70.95<br>वा.पु.पू. 5.31 | |
| | 2 त्रिधा विभज्य चात्मानं त्रैलोक्यं संप्रवर्तते । | लि.पु. 70.99 | |
| | 3 सृजते ग्रसते चैव रक्षते च त्रिभि: स्वयम् । | लि.पु. 70.100 | — — |
| | 4 धर्मादीनि च रूपाणि लोकतत्त्वार्थहेतव: । त्रिगुणस्तु स विज्ञेय: सत्त्वराजसतामस: ।। | वा.पु.पू. 4.44 | – – |
| त्रिदण्डी | 1 वाग्दण्ड: कर्मदण्डश्च मनोदण्डश्च ते त्रय: । यस्यैते नियता दण्डा स त्रिदण्डी व्यवस्थित: ।। | वा.पु.पू. 17.6 | – – |
| | 2 पाठभेद:—चतुर्थचरण--स त्रिदण्डी महामति: । | मा.पु. 41.22 | |
| त्रिधातु: | त्रयो हि धातव: ख्याता:·········पित्तं श्लेष्माश्च वायुश्च—एतैश्च धार्यतेजन्तुरेतै: क्षीणैश्च क्षीयते । आयुर्वेदविदस्तस्मात् त्रिधातुं मां प्रचक्षते ।। | महा. 12.330.21,22 | – – |
| त्रिपथगा | 1 त्रीन् पथो भावयन्तीति ततस्त्रिपथगा स्मृता । | वा.रा.बाल.44.6 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 तिस्रः कोटयोऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भूम्यन्तरिक्षे च तानि ते सन्ति जाह्नवि ।। | म.पु. 102.5 | – – |
| | 3 दिवि छायापथो यस्तु अनुनक्षत्र-मण्डलम् । दृश्यते भास्वरो रात्रौ देवी त्रिपथगा तु सा । अन्तरिक्षं दिवञ्चैव भावयन्ती भुवङ्गता ।। | वा.पु.पू. 47.29 | – – |
| | 4 धाराभिः तिसृभिः स्वर्गं पृथ्वीमतलं तथा । ममाज्ञया च गच्छन्ती तेन त्रिपथगामिनी ।। | ब्र.वै.कृ.ख. 34.23 | – – |
| | 5 ततो विसृज्यमानायाः स्रोतस्तत्सप्त ताङ्गतम् । त्रयः प्राचीमभिमुखं प्रतीची त्रय एव तु । — —.... — सप्तमी त्वनुगा तासां दक्षिणेन भगीरथी । तस्माद् भागीरथी या सा प्रविष्टा लवणोदधिम् ।। | वा. पु. पू. 47.37,39 | – – |
| | 6 क्षितौ तारयते मर्त्यान् नागांस्ता-रयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ।। | महा. (श.क.) | |
| त्रिपुरारिः | 1 यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै । त्रिपर्वगा त्रिशल्येन तेन तानि बिभेद सः । | महा. 7.173.57 तु. 13.145.24 | – – |
| | 2 एवं स त्रिपुरं दग्धं दानवांश्चाप्य-शेषतः । महेश्वरेण क्रुद्धेन —....। | महा. 8.24.121 | |
| | 3 एवं दग्ध्वा पुरास्तिस्रो भगवान् पुरहा नृप । ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ।। | भा.पु. 7.10.70 | |
| | 4 यदा त्रीणि समेतानि अन्तरिक्षे स्थितानि वै । त्रिपर्वाणि त्रिशल्येन तदा तपने व्यभेदयत् — — —....। प्रदीप्तं सर्वतो दिक्षु दह्यते त्रिपुरं पुरम् ।।........................ | म.पु. 188.21 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 5 एवं तु त्रिपुरं दग्धं शङ्करेण महात्मना ।। | तत्रैव 188.74 | | |
| | 6 तत्क्षणात्त्रिपुरं दग्ध्वा त्रिपुरान्तकरः शरः । | लि.पु.पू. 72.114 | | |
| | 7 पुरा दग्धं पुरत्रयम् । | लि.पु. 70.346 | – | – |
| त्रियामा | ज्योत्स्ना सन्ध्या तथाहश्च सत्त्वमात्रात्मकं स्वयम् । तमोमात्रात्मिका रात्रिः सा वै तस्मात्त्रियामिका ।। | वा.पु.पू. 9.19 | – | – |
| त्रियोनिः | 1 कामात् क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्तते । त्रियोनिः कीर्त्यते तेन त्रयमेतद् विवादकृत् ।। | अ.पु. 253.9 | – | – |
| | 2 त्रिविक्रमः क्रमाक्रान्तत्रैलोक्यः······ | वि.पु. 5.5.17 | | |
| | 3 तथा त्रिविक्रमं वक्ष्ये ब्रह्माण्डक्रमणोल्वणम् । पादपार्श्वे तथा बाहुमुपरिष्टात्प्रकल्पयेत् ।। | म.पु. 260.36 | – | – |
| त्रिविक्रमः | त्रिरित्येव त्रयो वेदा·········क्रमते तांस्तथा । सर्वास्त्रिविक्रम इति श्रुतः ।। | हरि. 3.88.51 | – | – |
| त्रिशंकुः ❀ | 1 एवं त्रीण्यस्य शङ्कूनि (पितुरपरितोषः, दोग्ध्रीवधः अप्रोक्षितमांसभक्षणञ्च) तानि दृष्ट्वा महातपाः । | हरि. 1.13.19 | 6 | 8 |
| | 2 त्रिशङ्कुरिति होवाच त्रिशङ्कुरिति सः स्मृतः । एवमुक्तो महेन्द्रेण त्रिशंकुरपतत् पुनः । विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ।। | वा. रा. बाल. 60.18 | | |
| | 3 पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।। एवं स त्रीणि (त्रीण्यस्य) शङ्कूनि दृष्ट्वा तस्य महातपाः । त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः ।। | वा. पु. उ. 26.108,109<br>ब्रह्म पु. 8.18.19 | – | – |
| त्रिशिराः ❀ | 1 त्रिभिः किरीटैः शुशुभे त्रिशिराः स रथोत्तमैः । | वा.रा.युद्ध 69.24 | 4 | 17 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 —····तैर्मन्त्रैः प्रावर्धत त्रिशिराः। एकेनास्येन सर्वलोकेषु द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ ।। | महा. 12.329.23 | |
| त्रिसौपर्णं | त्रिः परिक्रान्तवानेतत्सुपर्णो धर्ममुत्तमम् । यस्मात्तस्माद् व्रतं ह्येतस्त्रिसौपर्णमिहोच्यते ।। | महा. 12.336.19 | – – |
| त्रिस्रोतसं | पुत्रप्रेम्णाऽभ्यषिञ्चच्च स्रोतोभिस्तनयैस्त्रिभिः। पयसा शंखगौरेण देवदेवं निरीक्ष्य सा। तानि स्रोतांसि त्रीण्यस्याः स्रोतस्विन्योऽभवंस्तदा । नदी त्रिस्रोतसं देवो भगवानवदद्भव: ।। | लि.पु.पू. 43.39 | – – |
| त्रेता | 1 त्रीणि वर्षसहस्राणि त्रेता स्यात्परिमाणतः । तस्यास्तु त्रिशती सन्ध्या सन्ध्यांशस्त्रिशतः स्मृतः ।। | हरि. 1.8.13 | – – |
| | 2 त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः । अतस्त्रेतात्वमापन्नो यदेकात्त्रिविधः कृतः ।। | हरि. 3.23.5 | |
| | 3 एकोऽग्निः पूर्वमेवासीदैलस्त्रेतामकारयत् ।। | हरि. 1.26.47 | |
| | 4 त्रेता त्रीणि सहस्राणि संख्यैव परिकीर्त्यते । तस्यास्तु त्रिशती सन्ध्या सन्ध्यांशश्च तथाविधः ।। | वा.पु.पू. 57.25 | |
| | 5 तस्यापि त्रिशती सन्ध्या सन्ध्यांशास्त्रिशतः स्मृतम् । अनुषङ्गपादस्त्रेतायास्त्रिसाहस्रस्तु संख्यया ।। | वा.पु.पू. 32.57,58 | |
| त्रैशङ्कव: | 1 कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।····त्रैशंकव इति स्मृतः ।। | हरि. 1.13.24½ | – – |
| | 2 स राजा हरिश्चन्द्रस्त्रैशङ्कव इति श्रुतः । | वा.पु.उ. 26.117 | |
| त्र्यक्षः❋ | निमीलिताभ्यां नेत्राभ्यां बलाद् देवो महेश्वरः । ललाटे नेत्रमसृजत्तेन त्र्यक्षः स उच्यते ।। | महा. ग. द्रोण 202.138 | 3 16 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| त्र्यम्बक:※ | 1 तिस्रो देवीर्यदा चैव भजते भुवनेश्वर: । द्यामप: पृथिवीं चैव त्र्यम्बकश्च तत: स्मृत: ।। | महा. 7.173.89 | 3 16 |
| | 2 भूमित्रयाणां देव यस्मात् प्रतिष्ठा पुनर्लोकानां भावनामेयकीर्ति: । त्र्यम्बकेति प्रथमं तेन नाम—— | हरि. 2.74.28 | |
| | 3 क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चात्मानं संयोज्य नेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ।। | महा. 12.329.14 | |
| | 4 त्रिभिरेव कपालैस्तु त्र्यम्बकैरोषधिक्षये । इज्यते भगवान् यस्मात्तस्मात्त्र्यम्बक उच्यते ।। | वा.पु.पू. 31.46 | – – |
| त्वष्टा | तुष तुष्टौ स्मृतो धातुस्तस्मात्त्वष्टा निपात्यते । सृजत्येष प्रजास्तुष्टस्त्वष्टा तेन स उच्यते ।। | साम्ब.पु. 8.38 | – – |
| दक्ष: | 1 दक्षस्त्वजायतांगुष्ठाद् दक्षिणाद् भगवानृषि: ब्रह्मण:················। | महा. 1.60.9 | |
| | 2 दक्षोऽङ्गुष्ठात्स्वयम्भुव: । | भा.पु. 3.12.23 | |
| | 3 अङ्गुष्ठाद्दक्षिणाद्दक्ष: प्रजापतिरजायत । | मा.पु. 3.9 | |
| | 4 अंगुष्ठाद्दक्षिणाद्दक्ष: पूर्वं जातो मया श्रुत: । | वि.पु. 1.15.81 | |
| | 5 ब्रह्मणश्च दक्षिणांगुष्ठजन्मा दक्षप्रजापति: । | वि.पु. 4.1.6 | |
| | 6 अंगुष्ठाद्दक्षिणाद्दक्षमसृजद् द्विजसत्तम। | मा.पु. 101.9 | |
| | 7 बभूव धातुर्य: पुत्र: सहसा दक्षपार्श्वत: । सर्वकर्माणि दक्षश्च तेन दक्ष: प्रकीर्तित: ।। | ब्र.वै.ब्र.खं. 22.4 | – – |
| दक्षिणा (नायिका) | 1 तस्य शापभयाद् भीता दाक्षिण्येन च दक्षिणा । | वि.पु. 1.15.22 | – – |
| (यज्ञपत्नी) | 2 आविर्भूता दक्षिणांशात् कृष्णस्य तेन दक्षिणा । | ब्र.वै.प्र.ख. | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्र पूजिता । | ब्र.वै.प्र.ख. 12.96 | |
| दक्षिणाग्नि: | द्र.—दाक्षिणात्यम् | हरि. 3.36.20 | – – |
| दग्धरथ:❀ | द्र.—चित्ररथ: | महा.1.158.36 | 4 8 |
| दण्ड:(राजा)❀ | 1 यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि । दमनाद् दण्डनाच्चैव तस्माद् दण्डं विदुर्बुधा: ।। | महा. 12.15.8<br>अ.पु. 226.16 | 6 9 |
| | 2 नाम तस्य (इक्ष्वाको: कनिष्ठ: पुत्र:) च दण्डेति पिता चक्रेऽल्पमेधस: । अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ।। | वा. रा. उत्तर 79.15 | |
| दण्डकारण्यं | 1 शप्तो (दण्ड:) ब्रह्मर्षिणा (शुक्राचार्येण) वैधर्म्ये सहिते कृते । तत: प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ।। | वा. रा. उत्तर 81.9 | – – |
| | 2 य: (दण्ड:) चकार महात्मा वै दण्डकारण्यमुत्तमम् । | हरि. 1.10.25½ | |
| दत्तक: | दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् । | अ.पु 256.17 | – – |
| दत्त्वाप्रदानिकं | दत्त्वा द्रव्यञ्च सम्यग् य: पुनरादातुमिच्छति । दत्त्वाप्रदानिकं नाम तत् विवादपदं स्मृतम् ।। | अ.पु. 253.16 | – – |
| दम: | 1 यद् ग्राहयामास दमं मातरं जठरे स्थित: । दमशीलश्च भविता यतश्चायं नृपात्मज: । ततस्त्रिकालविज्ञान: सहितस्य पुरोहित: । दम इत्यकरोन्नाम नरिष्यन्तसुतस्य तु ।। | मा.पु. 133.4 | |
| | 2 दुष्टारिदमनं दमम् । | मा.पु 133 12 | |
| | 3 महारिदमनो दम: । | मा.पु. 133.40 | |
| दरद: | दरदं······जायमानेन येनेदमभवद्दारिता मही । | महा. 2.4.18 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| दर्श: | 1 विक्छिन्नांताममावास्यां पश्यतश्च समागतौ । अन्योन्यं चन्द्रसूर्यौ तु यदा तद्दर्श उच्यते ।। | वा.पु.पू. 56.42 | | |
| (कल्प:) | 2 यस्मात् कल्पो ह्ययं दृष्टस्तस्मात्तं दर्शमुच्यते । | वा.पु.पू.21.61 | – | – |
| दशग्रीव: | दशग्रीव: प्रसूतोऽयं दशग्रीवो भविष्यति (स्वरूपं दृष्ट्वा पितृकथनम्)। | वा.रा.उत्तर 9.33 | | |
| दाक्षिणात्यं | यजमानं तु यस्मात्तु दक्षिणां तु गतिं नयेत् । दक्षिणाग्निं तमाहु:…… | महा. आश्व. अपे. 1.4.2593½ | – | – |
| दानव:꙳ | 1 दानवानसृजद् दनु: । | महा.12.200.28 | | |
| | 2 दनुस्तु दानवाञ्जज्ञे । | हरि. 3.14.60 | 5 | 19 |
| | 3 शतमासन् दनो: सुता: । | अ. पु. 19.11 | | |
| | 4 इति पुत्रा: दनोर्वंशा: । इत्येते त्वसुरा: प्रोक्ता: दैतेया: दानवाश्च ये । | वा.पु.उ. 7.13, 14 | | |
| दामोदर:꙳ | 1 देवानां स्वप्रकाशत्वाद् दमाद् दामोदरं विदु: । | महा. 5.68.8 | 3 | 17 |
| | 2 दमात्सिद्धिं परीप्सन्तो मां जना: कामयन्ति हि । दिवं चोर्वीं च मध्यं च तस्माद् दामोदरो ह्यहम् ।। | महा. 12.328.39 | | |
| | 3 स तु तेनैव नाम्ना तु कृष्णो वै नाम बंधनात् । गोष्ठे दामोदर इति। | हरि. 2.7.36 | | |
| | 4 दाम्ना चोलूखले बद्धो विप्रकुर्वन् कुमारकम् । बभञ्जार्जुनवृक्षौ द्वौ ख्यातो दामोदरस्तदा । | तत्रैव 2.101.34 | | |
| | 5 स बद्धांगत निर्व्यूहाश्चित्रया वनमालया……नाम दामोदरेत्येवं गोपकन्यास्तदाऽब्रुवन् । | तत्रैव 2.20.22 | | |
| | 6 तयो: (महाद्रुमयो:) मध्यगतं दाम्ना बद्धं गाढं तथोदरे । ततश्च दामोदरतां स ययौ दामबन्धनात् ।। | वि. पु 5.6.20 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| दायभाग : | विभागोऽर्थस्य पैत्रस्य पुत्रैर्यस्तु प्रकल्प्यते । दायभागमिति प्रोक्तं तत् विवादपदं बुधैः ।। | अ.पु. 253.25 | |
| दाराः | दारा इत्युच्यते लोके नाम्नैकेन परन्तप । प्रोक्तेन चैव नाम्नायं विशेषः सुमहान् भवेत् ।। | महा. 13.47.30 | – – |
| दिवाकरः | दिवेति चाव्ययं लिङ्गं पठ्यते सूरिभिः सदा । दिवाकरोति यस्माच्च तस्मादेव दिवाकरः ।। | साम्ब.पु. 8.24 | |
| दीर्घतमाः | 1 एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि । स वै दीर्घतमा नाम शापादृषिरजायत ।। | महा.1.98.15½ | – – |
| | 2 तस्मादन्धो जास्यसि त्वं मच्छापान्नात्र संशयः । स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान् । स हि दीर्घतमा नाम········ | महा.12.328.48 | |
| | 3 यस्मात्त्वमीदृशे काले गर्भस्थोऽपि निषेधसि । मामेवमुक्तवांस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि । ततो दीर्घतमा नाम शापादृषिरजायत ।। | म.पु. 48.41,42 | |
| | 4 यस्मात्वमीदृशे काले सर्वभूतेप्सिते सति । अभिषेधसि तस्मात्त्वं तमो दीर्घं प्रवेक्ष्यसि ।। | म.पु.49.23 | |
| | 5 मामेवमुक्तवान् मोहात्तमो दीर्घं प्रवेक्ष्यसि । ततो दीर्घतमा नाम शापादृषिरजायत ।। | वा.पु.उ. 37.46 | |
| दुन्दुभिः※ | 1 ननर्द कम्पयन् भूमिं दुन्दुभिः दुन्दुभिर्यथा ।। | वा. रा. कि. 11.26 | 4 20 |
| (पर्वतः) | 2 स एव दुन्दुभिर्नाम श्यामपर्वत सन्निभः । शब्दभृत्यः पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः ।। | म पु.122 13 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| (देशभेदः) | 3 दुन्दुभेर्दुन्दुभिः स्मृतः । | ब्र. पु. 36. | |
| दुर्गा | 1 दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः । | महा.ग. विराट् 6.21 | 3 18 |
| | 2 तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति ।। | मा.पु. 91.46 | |
| | 3 अद्यप्रभृति मे नाम दुर्गेति ख्यातिमेष्यति । दुर्गदैत्यस्य समरे पातनादतिदुर्गमात् ।। | स्कन्द-काशीखंड 72.61 | |
| | 4 दुर्गो दैत्ये महाविघ्ने भवबन्धे च कर्मणि । शोके दुःखे च नरके यमदण्डे च जन्मनि । महाभयेऽतिरोगे चाप्याशब्दो हन्तृवाचकः । एतान् हन्त्येव या देवी सा दुर्गा परिकीर्तिता ।। | ब्र. वै. प्र. ख. 57.7, 8 | |
| | 5 दैत्यनाशार्थवचनो दकारः परिकीर्तितः । उकारो विघ्नाशार्थं वाचको वेदसम्मतः ।। रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । अपशत्रुघ्नवचनश्चाकारः परिकीर्तितः ।। स्मृत्युक्तिश्रवणाद् यस्या एते नश्यन्ति निश्चितम् । ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता ।। दुर्गेति दैत्यवचनो (दुर्गो दैत्येन्द्रवचनो) ऽप्याकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्तिता ।। | ब्र. वै. कृ. खं. 27.18-22 | – – |
| | 6 स्मरणाद्भये दुर्गे तारिता रिपुसंकटे । देवाः शक्रादयो यस्मात् तेन दुर्गा प्रकीर्तिता ।। | दे. पु. 27. (श.क.) | |
| | 7 दुर्गात् तारयते यस्मात् तेन दुर्गा शिवा मता । | अ.पु. 323.7 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 8 दुर्गा त्रायति भक्तं वा सदा दुर्गार्तिनाशिनी । दुर्ज्ञेया सर्वदेवानां तां दुर्गां पूजयाम्यहम् ॥ | (श.क.) | |
| दुर्जयः | सर्वसंग्रामदुर्जयः । स दुर्जय इति ख्यातः......। | महा. गी. प्रे. अनु. 2.11 | |
| दुर्योधनः | मोघं तवेदं भुवि नामधेयं दुर्योधनेतीह कृतं पुरस्तात् । न हीह दुर्योधनता तवास्ते ...... । | महा. 4.60.18 | – – |
| दृष्टिः | पश्यन्ती भवते दृष्टिः । | महा. 12.240.5 | – – |
| देवः | स्वगाद्यैः क्रीडते देवो योऽहं स पुरुषः प्रभुः । | अ.पु. 216.15 | |
| देवयज्ञः | शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा । वैश्वदेवश्च कर्तव्यो देवयज्ञः स वै स्मृतः ॥ | कू.पु.उ. 18.103 | |
| देवरात❀ | 1 देवैर्दत्तः स (शुनःशेपः) वै यस्मात् देवरातस्ततोऽभवत् । | हरि.1.27.56; वा.पु.उ. 29.91 | 6 10 |
| | 2 संकेतमात्रम् । | महा.गी.प्रे.अनु.3.7 | |
| | 3 शुनश्शेपो देवैर्दत्तः ततश्च देवरातनामाऽभवत् । | वि.पु. 4.7.37 | |
| | 4 यो रातो देवयजने देवैर्गाधिषु तापसः । देवरात इति ख्यातः शुनःशेपः स भार्गवः ॥ | भा.पु.9.16.32 | |
| देवर्षिः | ऋषन्ति देवान् यस्मात्ते तस्माद्देवर्षयः स्मृताः । | वा.पु.पू. 61.85 | |
| देवशिला | शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं भविष्यसि । देवव्रता देवशिला सर्वदेवादिरूपिणी । सर्वदेवमयी पुण्या निश्चला यासुरस्य (गयासुरस्य) हि ॥ | अ.पु. 114.20 | |
| देवसेना | देवानां दैत्यग्रस्तानां पुरा सेना बभूव सा । यं ददौ च तेभ्यश्च देवसेना च तेन सा ॥ | ब्र.वै.प्र.ख. 43.24 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| दैत्यः꙳ | 1 दितिस्त्वजनयत् पुत्रान् दैत्यान् । | वा.रा.दाक्षि. अरण्य 14.15 | 4 21 |
| | 2 दितिर्दैत्यान् व्यजायत । | हरि. 3 14.60 | |
| | 3 दितिस्तु सर्वानसुरान् महासत्त्वान् व्यजायत । | महा.12.200.28 | |
| दैवं | 1 दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् । | 3.33.15 | – – |
| | 2 अधिदैवं च यद् दैवं दैवमिति संज्ञितम् । | हरि. 3.7.17 | |
| दौर्मनस्यं | तमसा रजसा चैव संस्पृष्टं दुर्मनः स्मृतम् । तदा मनसि सञ्जातं दौर्मनस्यमिति स्मृतम् ॥ | लि पु.पू. 9.10 | |
| द्युतिमान् | द्युतिमान् नाम पार्थिवः । महाभागो महातेजा महासत्त्वो बहाबलः । | महा.गी.प्रे.अनु.2 9 | – – |
| द्यूतं | अक्षवज्रशलाकाद्यैर्देवतं द्यूतमुच्यते । | अ.पु: 253.29 | |
| द्रोणः | 1 ततोऽस्य (भरद्वाजस्य) रेतश्चस्कन्द तदृषिर्द्रोण आदधे । तस्मिन् समभवद् द्रोणः कलशे तस्य धीमतः ॥ | महा. 1.121.4½ | – – |
| | 2 भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत । महर्षेरुग्रतपसस्तस्माद् द्रोणो व्यजायत ॥ | महा. 1.57.89 | |
| द्वापरं | 1 तस्य वर्षसहस्रे द्वे द्वापरं परिकीर्तितम् । तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः । | हरि. 1.8.14 | |
| | 2 द्वे सहस्रे द्वापरं तु सन्ध्यांशौ च चतुःशतम् । | म.पु.142.22 | – – |
| द्वारवती | 1 कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमाम् । | हरि. 1.10.36; अ.पु.237.15 | |
| | 2 चातुर्वर्णानि चत्वारि द्वाराणि विदधुश्च ते । | हरि.2.58.18 तु.-हरि.2.46.29 2.55.112 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| द्विजिह्वः | द्विजिह्वाश्च कृता । सर्वा गरुडेन महात्मना । | महा.1.34.24<br>1.30.20पा.टि.372 | – – |
| द्विद्वारः (व्यवहारः) | पक्षद्वयाभिसम्बन्धात् द्विद्वारः समुदाहृतः । पूर्ववादस्तयोः पक्षः प्रतिपक्षस्त्वनन्तरः ।। | अ.पु.253.11 | – – |
| द्विपः | द्विपो द्वाभ्यामपि स्मृतः । | वा.पु.उ.8.228 | – – |
| द्विरदः | द्विरदो द्विरदाभ्यां च । | वा.पु.उ.8.227 | – – |
| द्वीपः | द्विरापत्वात् स्मृतो द्वीपः । | म.पु.123.35;<br>वा.पु.49.132 | – –<br>– – |
| द्व्यभियोगः | द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्का षडभिस्तु संसर्गात् तत्त्वपोढादिदर्शनात् ।। | अ.पु.253.10 | – – |
| द्वैपायनः | 1 द्वीपे न्यस्तः स यद् बालस्तस्माद् द्वैपायनोऽभवत् ।<br>2 गर्भमुत्सृज्य मामकम् । द्वीपेऽस्या एव सरितः''''कन्यापुत्रो मम पुरा द्वैपायन इति स्मृतः ।। | महा. 1.57.71<br><br>महा. 1.99.14 | <br><br>– – |
| धनं | धत्ते धारयते चेदमेतस्मात्कारणाद्धनम् । | महा. 5.112.2 | – – |
| धनञ्जयः | सर्वान् जनपदाञ्जित्वा वित्तमाच्छिद्य केवलम् । मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ।। | महा. 4 39.11 | – – |
| धरा<br>धरिणी<br>धरित्री | धारणात् । | ब्र.वै.प्र.ख.9.30 | |
| धर्मः | 1 धारणाद् धर्म इत्याहुः धर्मेण विधृताः प्रजाः । यस्माद् धारयसे सर्वं त्रैलोक्यं''''''धारणाद्धि द्विषां चैव—''तस्माद् धारणमित्युक्तं स धर्म इति निश्चयः । | वा.रा.उत्तर<br>2.6-7 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 2 धनात्स्रवति धर्मो हि धारणाद्वेति निश्चयः । | महा.12.91.15 | | |
| | 3 धारणाद् धर्म इत्याहुः धर्मेण विधृताः प्रजाः । यः स्याद् धारणसंयुक्तः स धर्म इति''''—।। | महा.12.110.11 तु.-8.49.50 | – | – |
| | 4 धारणाच्छ्रेयसो ध्यानाद् यं धर्म कवयो विदुः । | महा. 15.35.16 | – | – |
| | 5 नमो धर्माय महते धर्मो धारयति प्रजाः । | महा. 5.135.8 | | |
| | 6 धर्मो हि धृतः कृत्स्नं धारयते जगत् । | महा. 1.57.5 | – | -- |
| | 7 धर्मेति धारणे धातुर्महत्त्वे चैव-मुच्यते । आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ।। | म.पु. 145.27 | | |
| | 8 धारणार्थे महान् ह्येष धर्मशब्दः प्रकीर्तितः । | लि.पु पू. 10.12 | | |
| | 9 धारणा धृतिरित्यर्थाद् धातोर्धर्मः प्रकीर्तितः । | वा.पु.पू. 59.28 | | |
| धर्मजः | पुराऽहमात्मजः पार्थ प्रथित. कारणान्तरे । धर्मस्य—— ''''धर्मजः स्मृतः ।। | महा. 12.330.40 | -- | -- |
| धर्मज्ञः | श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मज्ञ उच्यते । | लि.पु.पू. 10.8 | | |
| धर्मराजः (युधिष्ठिरः) | 1 शमेन धर्मेण च रंजिता प्रजा ततस्तवेहेश्वर धर्मराजता । यमस्तु कर्मणा तेन भृशं पीडितमानसः । | महा. 3.281.40 | | |
| | 2 अपीपलद् धर्मराजः पितृवत् रञ्जयत् प्रजाः । | भा.पु. 1.12.4 | | |
| (यमराजः) | 3 धर्मेण रञ्जयामास धर्मराज इमाः प्रजाः ।। | हरि.1.9.58½ | -- | -- |
| | 4 यमस्तु तेन शापेन भृशपीडित-मानसः । धर्मेण रञ्जयामास धर्म- | | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | राजस्ततस्तु सः। सोऽलभत् कर्मणा तेन शुभेन परमद्युतिः ।। | वा.पु.उ. 22.80, 81 | |
| | 5 धर्मोऽभिरोचते यस्मात् धर्मराजस्ततः स्मृतः ।। | मा.पु.108.16 | |
| | 6 धर्मेणेमा. प्रजाः सर्वा यस्माद्रञ्जयसे प्रभो। तस्मात्ते धर्मराजेति नाम सद्भिर्निगद्यते ।। | म.पु.213.3 | |
| धर्मवनं | तत्र धर्मवनं नाम धर्मसिद्धिप्रदं वनम्। | कू.पु.पू. 14.26 | – – |
| धर्मवस्तूपमा | यत्र साधारणो धर्मः कथ्यते गम्यतेऽपि वा।ते धर्मवस्तु प्राधान्याद् धर्मवस्तूपमे उमे ।। | अ.पु. 344.10 | |
| धाता | 1 धारणाद् धातृशब्दं च लभते लोक संज्ञितम्। | हरि.3.16.17 | -- -- |
| | 2 यस्माद्धारयते लोकान् भूमिं तेषां ददानि च। डुधाञ् धारणे धातुस्तस्माद्धाता स उच्यते ।। | साम्ब.पु.8.27 | |
| धात्री | 1 कुक्षिसंधारणाद्धात्री। | महा.12.258.30 | – – |
| (पृथ्वी) | 2 सैषा धात्री विधात्री च धारणी च वसुन्धरा। | वा.पु.उ.1.190 ब्रह्म. 2.36.226 | |
| धारणा | 1 धारणेत्युच्यते चेयं धार्यते यन्मनो मया। | मा.पु.39.41 | |
| | 2 धारणा मनसोध्येये संस्थितिर्ध्यानवद् द्विधा। | अ.पु.375.1 | |
| | 3 धारणा मनसि स्थितिः। | अ.पु.375.2 | |
| | 4 कालावधिपरिच्छिन्नं देवे संस्थापितं मनः। न प्रच्यवति यल्लक्ष्याद् धारणा साभिधीयते ।। | अ.पु.375.3 | |
| | 5 तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः। कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ।। | वि.पु. 6.7.74 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 6 मूर्तं भगवतो रूपं सर्वापाश्रयनिः-स्पृहाम् । एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते ।। | वि.पु. 6.7.78 | |
| | 7 मनसो धारणा चैव धारणेति प्रकीर्तिता । | वा.पु.पू.1.29 | |
| | 8 धारणा मनसो धृतिः । | गरुड पु.49.35 | |
| | 9 प्राणायामैर्द्वादशभिर्यावत्कालो हृतो भवेत् । यस्तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत् । ध्येयान्न चलते यस्य मनोऽभिध्यायतो भृशम् । प्राप्यावधि कृतं कालं यावत्सा धारणा स्मृता ।। | गरुड पु.240 | |
| धार्ष्टकं-धार्ष्ट | 1 धृष्णोश्च धार्ष्टकं क्षत्रं रणधृष्टं बभूव ह । | हरि. 1.10.29 | – – |
| | 2 धृष्टाद् धर्ष्टकं क्षत्रं रणधृष्टं बभूव ह । | वा.पु.उ. 26.4 | |
| | 3 धृष्टाद् धार्ष्टमभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ । | भा.पु.9.2.17 | |
| धीमहि | दधातेर्वा धीमहीति मनसा धारये महि । | अ.पु 216 12 | – – |
| धुन्धुमारः | 1 धुन्धोर्वधात्तदा राजा कुवलाश्वो महामनाः । धुन्धुमार इति । | महा. 3.195.29 | |
| | 2 धुन्धुर्दैत्यो महावीर्यो मधुकैटभयोः सुतः । कुवलाश्वश्च नृपतिर्धुन्धुमार इति स्मृतः । नाम्ना च गुणसंयुक्तः। | महा. 3.195.36 | |
| | 3 कुवलाश्वः सुतस्तस्य (बृहदश्वस्य) राजा परमधार्मिकः । यः स धुन्धु-मारत्वमागतः ।। | हरि. 1.11.23 | |
| | 4 तस्मिन् प्रयाते दुद्धर्षे दिवि शब्दो महानभूत् । अद्य प्रभृत्येष नृपो धुन्धुमारो भविष्यति ।। | वा.पु.उ. 26.50 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 योऽसौ (कुवलयाश्वः) उदकस्य महर्षेरपकारिणं धुन्धुनामानमसुरं वैष्णवेन तेजसाऽप्यायितः पुत्र-सहस्रै रेकविंशद्भिः परिवृतो जघान धुन्धुमारसंज्ञामवाप । | वि.पु. 4.2.40 | |
| | 6 धुन्धुमारत्वमगमद्धुन्धुर्नाम्ना हतः पुरा | म पु. 12 31 | |
| | 7 यः (कुवलयाश्वः) प्रियार्थमुत्तङ्कस्य धुन्धुनामासुरं बली……………। धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ | भा.पु.9.6.23 | |
| | 8 धुन्धुमारः समभवत् धुन्धुं हत्वा महासुरम् । | कू.पु.पू.20.20 | |
| | 9 धुन्धुमारत्वमापन्नो धुन्धुं हत्वा महाबलम् । | लि.पु.पू.65.35 | |
| | 10 धुन्धुर्नाम हतो दैत्यस्तेनाऽसौ पृथिवी तले । धुन्धुमारेति विख्यातं नाम प्रापातिविश्रुतम् ॥ | दे.भा.7.9.36 | |
| धूर्जटिः | धूम्रं रूपं च यत्तस्य धूर्जटिस्तेन उच्यते । | महा. 7.173.88, 13.246.12 | – – |
| धृष्टद्युम्नः❀ | 1 धृष्टत्वादतिधृष्णुत्वाद्धर्माद् द्युत-सम्भवादपि । धृष्टद्युम्नः………। | महा. 1.155.49 | 6 11 |
| | 2 धृष्टत्वादत्यमर्षित्वाद् द्युम्नाद् द्युतिसम्भवादपि । | महा.ग. 1.169 53 | – – |
| ध्यानं | 1 ध्यै चिन्तायां स्मृतो धातुर्विष्णुचिन्ता मुहुर्मुहुः । अनाक्षिप्तेन मनसा ध्यान मित्यभिधीयते ॥ | अ.पु.374.1 | |
| | 2 ब्रह्मचिन्ता समा शक्तिर्ध्यानं नाम तदुच्यते । | अ.पु.374.2 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 ध्येयालम्बनसंस्थस्य सदृशप्रत्ययस्य च । प्रत्ययान्तरनिर्मुक्तः प्रत्ययो ध्यानमुच्यते ॥ ध्येयावस्थितचित्तस्य प्रदेशे यत्र कुत्रचित् । ध्यानमेतत्समुद्दिष्टं प्रत्ययस्यैकभावना ॥ | अ.पु.374.3;4 | |
| | 4 ब्रह्मात्मचिन्ता ध्यानं स्यात् । | गरुड पु.49.3,5 | |
| नकुलः | कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः ॥ | महा.ग. विराट 5.26 | – – |
| नक्षत्रं | 1 न क्षीयन्ते पुनस्तानि तस्मान्नक्षत्रता स्मृता । क्षेत्राण्येतानि वै पूर्वमापतन्ति गभस्तिभिः ॥ तेषां क्षेत्राण्यथादत्ते सूर्यो नक्षत्राङ्गतः ॥ | वा.पु पू.53.51 | |
| | 2 न क्षीयन्ते यतस्तानि तस्मान्नक्षत्रता स्मृता । | लि.पु.पू. 60.26 | – – |
| नगः | 1 यस्मात्तेषां वृता बुद्धिदुःखानि करणानि च । तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्तिता ॥ | लि.पु.70.143 | |
| | 2 यस्मात्तैः संवृता बुद्धिर्मुख्यानि करणानि च । तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्तिताः ॥ | वा.पु.पू.6.37 | |
| | 3 शिलाया जंघनं भूयः समाक्रान्तनगेन तु । धर्मराजेन सम्प्रोक्तो न गच्छेति नगः स्मृतः ॥ | वा.पु.उ.45.28 | – – |
| नग्नः | 1 यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते । परिव्राट् चापि मैत्रेय स नग्नः पापकृन्नरः ॥ | वि पु.3.18.37 | |
| | 2 ब्राह्मणाद्यास्तु ये वर्णा स्वधर्मादन्यतो मुखाः । यान्ति ते नग्नसंज्ञां तु हीनकर्मस्ववस्थिताः ॥ | वि पु.3.18.47 | |
| | 3 ततो मैत्रेय तन्मार्गवर्तिनो येऽभवज्जनाः । नग्नास्ते तैर्यतस्त्यक्तं त्रयीसंवरणं तथा ॥ | बि.पु.3.18.35 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| नदः | भवन्ति नदतां नदाः । | महा. 12.315.42 | – – |
| नन्दव्यूहः | नन्दव्यूहो समाख्यातं नन्दाया ब्यूह उच्यते । | 27.115 | – – |
| नन्दी | 1 शिलादं तात तातेति प्राह नन्दी पुनः पुनः । तं दृष्ट्वा नन्दनं जातं शिलादं परिषष्वजे ।। | कु.पु.पू.43.26 | |
| | 2 वत्स वत्स महाभाग पाहि मां परमेश्वर । त्वयाऽहं नन्दितो यस्मान्नन्दी नाम्ना सुरेश्वर । तस्मान्नन्दय मां नन्दिन्नयामि जगदीश्वरम् ।। | लि.पु.पू.42.30 | – – |
| नयनं | नक्षत्राधिपतिः सोमो नयनं वाममीशितुः । नयनं चैवमीशस्य दक्षिणं भास्करः स्वयम् ।। | लि.पु.पू.59.45 | – – |
| नराः | 1 अरमित्येष शीघ्रन्तु निपातः कविभिः स्मृतः । एकार्णवे भवन्त्यापो न शीघ्रास्तेन ते नराः ।। | वा.पु.उ.7.52 | |
| | 2 नानात्वे चैव शीघ्रे च धातुर्वै अर उच्यते । एकार्णवे तदा यो वै न शीघ्रास्तेन ता नराः ।। | वा.पु.उ.38.183 | – – |
| नागः | नागो नगविरोधतः । | वा.पु.उ 8.228 | |
| नागधन्वा | यत्र पन्नगराजस्य वासुकेः सन्निवेशनम् । | महा. 9.36.30 | – – |
| नागेश्वरी | नागानां प्राणरक्षित्री जनमेजययज्ञके । नागेश्वरीति विख्याता सा नागभगिनी तथा ।। | ब्र.वै.प्र.ख.45.9 | – – |
| नाथः | नाथ इत्येष धातुर्वै धातुज्ञैः पालने स्मृतः । यस्माद् भूतस्य लोकस्य भव्यस्य भवतस्तदा । लोकत्रयस्य नाथास्ते तस्मादिन्द्रा द्विजैः स्मृता ।। | वा.पु.उ.3.20 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| नारदः | 1 अनावृष्ट्यवशेषे च काले बालो बभूव ह। नारं ददौ जन्मकाले तेनायं नारदाभिधः। ददाति नारं ज्ञानञ्च बालकेभ्यश्च बालकः। जातिस्मरो महाज्ञानी तेनायं नारदाभिधः॥ वीर्येण नारदस्यैव बभूव बालको मुनेः। मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः॥ | ब्र.वै.ब्र.ख.21.7.8.9 | |
| | 2 कल्पान्तरे ब्रह्मकाष्ठाद्बभूवुर्बहवो नराः। नरान्ददौ तत्कण्ठञ्च तेन तन्नारदः स्मृतः॥ ततो बभूव बालश्च नारदात् कण्ठदेशतः। अतो ब्रह्मा नाम चक्रे नारदश्चेति मङ्गलम्॥ | ब्र.वै.ब्र.ख.21.13.14 | |
| | 3 विधेर्नरदनाम्नश्च कण्ठदेशाद् बभूव सः। मरीचिमिश्रैर्मुनिभिः रुद्धे कण्ठाद् बभूव सः। नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना॥ | ब्र.वै.ब्र.ख.22.2 | |
| नारदीयं | नारदोक्तं पुराणन्तु नारदीयं प्रचक्षते। | वि.पु.5.44.130 | |
| नारायणः❀ | 1 अपां नारा इति प्रोक्ताः संज्ञा नाम कृता मया। तेन नारायणोऽस्मि॥ | महा.3.17.3 | 3 19 |
| | 2 आपो नारास्तु तनव इत्यपां नाम शुश्रुम। अयनं तेन चैवास्ते तेन नारायणः॥ | महा.ग.वन 271.42 | |
| | 3 आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः॥ | हरि.1.1.28:वि.पु.1.4.6 कु.पु.पू.5.5.तु.महा. 12 328.35.अ.पु.17.7 | |
| | 4 नारा आपः समख्यातास्तासामयनमादितः। यतस्त्वं भूतभव्येश तन्नारायणशब्दितः॥ | हरि.3.88.44 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 नाराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः ।। | महा.गी.प्रे. अनु.124. दा.6 | |
| | 6 नराणामयनाच्चैव तेन नारायणः । | महा.5.68.10 | |
| | 7 नराणामयनं ख्यातमहमेकः सनातनः । | महा. 12.328.35 | |
| | 8 तास्ववात्सीत्स्वसृष्टासु सहस्र-परिवत्सरान् । तेन नारायणो नाम यदापः पुरुषोद्भवाः ।। | भा.पु.2.10.11 | |
| | 9 यथा नारायणो राजन् वाराहं वपुरास्थितः । दंष्ट्रया गां समुद्रस्था-मुज्जहारारिमर्दनः ।। | म.पु.247.6 | |
| | 10 नारञ्च मोक्षणं पुण्यमयनं ज्ञान-मीप्सितम् । तयोर्ज्ञानं भवेद्यस्मात् सोऽयं नारायणः प्रभुः ।। | ब्र.वै.कृ.ख.111.24 | |
| | 11 आपो नाराश्च सूनव इत्यपां नाम शुश्रुमः । आपूर्य नाभिरयनं कृतवा-नात्मनो यतः ।। अप्सु शेते यतस्त-स्मात्ततो नारायणः स्मृतः ।। | लि.पु.70.119.120 | |
| | 12 नराणामयनं यस्मात्तेन नारायणः स्मृतः । | वा.पु.पू.5.35 | |
| | 13 आपो नारा वै तनव इत्यपां नाम शुश्रुमः । आसु शेते यतस्तस्मात्ततो नारायणः स्मृतः ।। | कू.पु.पू.4.62.5.2 वा.पु.पू.6.`.भा.पु.47 | |
| | 14 आपो नाराख्यास्तनवः इत्यपान्नाम शुश्रुम । आपूर्य नाभिं तत्रास्ते तेन नारायणः स्मृतः ।। | वा.पु.पू.7.59 | |
| | 15 नारा इत्युच्यते आप ऋषिभिस्तत्त्व-दर्शिभिः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।। | म.पु.248.43 | |
| | 16 आपो नारायणोद्भूतास्ता एवास्या- | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | ऽयनं स्मृतः । तस्मान्नारायणं देवं स्नानकाले स्मरेद् बुधः ।। | कू.पु.उ.18.62 | |
| | 17 सारूप्य मुक्तिर्वचनो नारेति च विदुर्बुधाः । यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः ।। | ब्र.वै.कृ.ख.111.22 | |
| | 18 नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम् । यतो हि गमनं तेषां सोऽयं नारायणः प्रभुः ।। | ब्र.वै.कृ.ख.111.23 | |
| | 19 प्रकृते पर एवाऽयः स नरः पञ्चविंशकः । तस्येमानि च भूतानि नाराणीति प्रचक्षते । तेषामप्ययनं यस्मात्तस्मान्नारायणः स्मृतः ।। | (श.क.) | |
| | 20 आपो नारा इति प्रोक्ताः मुनिभिस्तत्त्वदर्शिभिः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।। | मा.पु.4.43 | |
| | 21 आपो नारा वै तनव इत्यपां नाम शुश्रुम । तासु शेते स यस्माच्च तेन नारायणः स्मृतः ।। | मा.पु.47.5 | |
| | 22 सुष्वापाम्भसि यस्तस्मान्नारायण इति स्मृतः | लि.पु.पू.4.59 | – – |
| नारायणी | 1 यशसा तेजसा रूपे नारायणसमा गुणैः शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ।। | 57.9 ब्र.वै.कृ.ख | |
| | 2 नारायणार्धाङ्गभूता तेन तुल्या च तेजसा । सदा तस्य शरीरस्थ तेन नारायणी स्मृता ।। | ब्र.वै.कृ.ख.27.29 | – – |
| नारीकवचं | 1 योऽसौ (मूलकः) निःक्षेत्रे क्ष्मातलेऽस्मिन् क्रियमाणे स्त्रीभिर्विवस्त्राभिपरिवार्य रक्षितः ततस्तं नारीकवचमुदाहरन्ति । | वि.पु.4.4.74 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिलक्षितः। नारीकवच इत्युक्तो निःक्षेत्रे मूलकोऽभवत् ।। | भा.पु.9.9.40 | – – |
| नासत्यः | 1 नासत्यश्चापि दस्रश्च ............ संज्ञानासाविनिर्गतौ ।। | महा.गी.प्रे.अनु. 150.17 | |
| | 2 सोऽश्वरूपेण भगवान् (मार्तण्डः) तां मुखे समभावयत् ।......सा तन्निरवमच्छुक्रं नासिकायां विवस्वतः। नासत्यः.... — .... | हरि.1.9.54 | |
| | 3 सवितुश्चाश्वरूपस्य नासिकाभ्यां तु तौ स्मृतौ। असूत सा महाभागा त्वन्तरिक्षेऽश्विनौ किल ।। नासत्यञ्च दस्रञ्च मार्तण्डस्यात्मजावुभौ ।। | वा.पु.उ.22.24 | |
| | 4 ततश्च नासिकायोगं तयोः (अश्वरूपभानु-वडवारूपसंज्ञा) स्तत्र समेतयोः। नासत्यदस्रतनयावश्वीवक्त्रविनिर्गतौ ।। | मा.पु.78.23 | |
| | 5 अश्वरूपेण मार्तण्डस्तां मुखे समभावयत्। मैथुनाय विचेष्टन्ती परपुंसोऽपशङ्कया। सा तन्निरधमच्छुक्रं नासिकाभ्यां विवस्वतः। देवौ तस्मादजायेतामश्विनौ भिषजां वरौ। नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।। | वा.पु.उ.22.76.78 | |
| | 6 सैव (संज्ञा) भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि। | भा.पु.6 6.40 | |
| | 7 नासापुटाभ्यामुत्सृष्टं परोऽयमिति शङ्कया। तद्रेतसस्ततो जातावश्विनाविति निश्चितम्। दस्रौ सुतत्वात् सञ्जातौ नासत्यौ नासिकाग्रतः ।। | म.पु.11.36.37 | – – |
| | द्र. अश्विनीकुमारः, अश्विनौ । | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| निन्दा | निन्दां तामाहुराचार्याः यद्दोषान्निन्द्यते वचः । | वा.पु पू.59.109 | – – |
| निमिः | नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यति । त्वत्कृते च निमिष्यन्ति चक्षूंषि····· वायुभूतेन चरता विश्रमार्थं मुहुः मुहुः ।। | वा.रा. उत्तर 57.16 | – – |
| निमेषः | 1 तदहं (निमिः)इच्छामि सकललोकलोचनेषु वस्तुं न पुनश्शरीरग्रहणं कर्तुमित्येवमुक्तै र्देवैरसावशेषभूतानां नेत्रेष्ववतारितः । ततो भूतान्युन्मेषनिमेषं चक्रुः । | वि.पु.4.5.18.19 | – – |
| | 2 विदेह उष्यतां कामं लोचनेषु शरीरिणाम् । उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ।। | भा.पु.9.13.11 | |
| | 3 अथ ब्रह्मण आदेशाल्लोचनेष्ववसन्निमिः । निमेषाःस्युश्च लोकानां तद्विश्रामाय नारद ।। | म पु.61.35 | |
| | 4 नेत्रपक्ष्मसु सर्वेषां त्वं वसिष्यसि पार्थिव । त्वत्सम्बद्धात्तथा तेषां निमेषः सम्भविष्यति । चालयिष्यन्ति तु तदा नेत्रपक्ष्माणि मानवाः ।। | म.पु.201.19.20 | |
| नियमः | इन्द्रियग्रामनियमान्नियमश्चाभिधीयते । | अ.पु.175.3 | – – |
| नियमोपमा | व्यावृत्तेर्नियमोपमा । | अ.पु.343.12 | – – |
| निरुक्तं | नामधातुविभक्तीनां तत्त्वार्थनियमाय च । सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ।। | महा. आश्व. अपे.1.4.2672½ | – – |
| निश्चयोपमा | उपमेयस्य संशय्य निश्चयान्निश्चयोपमा | अ.पु 344.18 | |
| निषादः* | 1 निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः । तस्मान्निषादा संभूताः। | महा. 12.59.102 | 7 6 |
| | 2 तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा । निषादवंश-कर्ताऽसौ बभूव ·····।। | हरि.1.5.19 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 निषीदेत्यब्रवीदेनं पुत्रं शान्तं पितामहः । तस्मान्निषादः सम्भूतः स्वरस्तु स निषादवान् ।। | वा.पु.21.42 | |
| | 4 तमार्तं विह्वलं दृष्ट्वा निषीदेत्यब्रुवन् किल । निषादवंशकर्ताऽसौ बभूवानन्तविक्रमः ।। | वा.पु.उ.1.123 | |
| | 5 निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् ।। | वि.पु.1.13.35 | |
| | 6 ते मन्त्रैर्विह्वलं दृष्ट्वा निषीदेत्यब्रुवंस्तदा । निषादवंशकर्ता स बभूव मुनिसत्तमाः ।। | अ.पु. | |
| | 7 ददृशुस्ते महात्मानो निषीदेत्यब्रुवंस्ततः । तेषां तद्वचनं श्रुत्वा निषसाद भयातुरः ।। | पद्म पु.भूमि.28.43 | |
| नीलकण्ठः | 1 दधार भगवान् कण्ठे (विषं)···· तदाप्रभृति देवस्तु नीलकण्ठ इति श्रुतिः ।। | महा.1.17<br>पा.टि.274 | – – |
| | 2 अस्य (रुद्रस्य) भुजगः पीड्यमानः कण्ठो नीलतामुपनीतः । | महा.12.329.15 (2, 3) | |
| | 3 स्वायम्भुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमेव वा । | महा.12.329 15 (4) | |
| | 4 दत्तः प्रहारः कुलिशेन पूर्व····— कण्ठे नैल्यं तेन ते यत्प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेति कल्पः ।। | हरि.2.74.31 | |
| | 5 तत्कृता नीलता चासीत् (विष पानान्तरम्) कण्ठे बर्हिनिभा शुभा । तदाप्रभृत्ति चैवाहं नीलकण्ठ इति स्मृतः । | महा.गी.प्रे.अनु. 141.दा.4 | |
| | 6 क्षीराब्धेर्मथ्यमानाच्च विषं हलाहलं ह्यभूत् । हरेण धारितं कण्ठे नीलकण्ठस्ततोऽभवत् ।। | अ.पु.3.9 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| नीललोहितः | 1 लोहितोऽभूत् स्वयं नीलः शिवस्य हृदयोद्भवः। नीलश्च लोहितश्चैव यतः कालाकृतिः पुमान् । नील-लोहित इत्युक्तस्तेन देवेन वै प्रभुः ।। | लि.पु.पू.41.25.27 | |
| | 2 नीलं येन ममाङ्गं तु रसाक्तं लोहितं त्विषा । नीललोहित इत्येव ततोऽहं परिकीर्तितः ।। | स्कन्द पु. (श.क) | – – |
| नृसिंहः | 1 नरस्यार्धतनुं कृत्वा सिंहस्यार्द्धं तनुं तथा । नृसिंहवपुरव्यक्तो हिरण्य-कशिपोः पुरे ।। | कू.पु.पू.16.55 | |
| | 2 सिंहस्य कृत्वा वदनं मुरारिः सदा करालञ्च सुरक्तनेत्रम् । अर्द्धं वपुर्वै मनुजस्य कृत्वा ययौ सभां दैत्यपतेःपुरस्तात् ।। | अ.पु. (श.क.) | – – |
| नैमित्तिकः (प्रलयः) | एप नैमित्तिको नाम मैत्रेय प्रति-सञ्चरः । निमित्तं तत्र यच्छेते ब्रह्म-रूपधरो हरिः ।। | वि पु.6.4.7 | |
| नैमिषः (शः) (नैमिषारण्यं) | 1 यत्रास्य (चक्रस्य) शीर्यते नेमिः स देशः तपसः शुभः ।.................. प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्य-शीर्यत । तद्वनं तेन विख्यातं नैमिषं (शं) मुनिपूजितम् ।। | (श.क.) वा.पु. | |
| | 2 नेमिः संशीर्यते यत्र स देशः पावनः स्मृतः। .................. प्रेत्यात्र चालयंश्चक्रनेमिः शीर्णोऽ-त्र पश्यतः । तेनेदं नैमिशं प्रोक्तं क्षेत्रं परमपावनम् ।। | दे भा.1.2.28–32 | |
| | 3 भ्रमतो धर्मचक्रस्य यत्र नेमिरशीर्यत । कर्मणा तेन विख्यातं नैमिषं मुनि-पूजितम् ।। | वा.पु.पू.2 7 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 गच्छतो धर्मचक्रस्य यत्र नेमिः व्यशीर्यत । पुण्यः स देशः मन्तव्यः इत्युवाच तदा प्रभुः ॥ | वा.पु.पू.1.166 | |
| | 5 यत्रास्य नेमिः शीर्येत स देशस्तपसः शुभः । ततो मुमोच तच्चक्रं ते च तत् समनुव्रजन् । तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत । नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्वत्र-पूजितम् ॥ | कू.पु.उ.43.9 | |
| नैमिषारण्यं❀ | 1 नेमिस्तु हरिचक्रस्य शीर्णा यत्रा-भवत् पुरा। तदैतन्नैमिषारण्यम्···· | महा. 2.87.7; म पु.22.15 | 8 4 |
| | 2 उवाच निमिषेणेदं निहतं दानवं बलम् । अरण्येऽस्मिंस्ततस्त्वेतन्नैमि-षारण्यं-संज्ञितम् ॥ | लि.पु पू.1.8 वाराह.पु. (श.क.) | |
| नैमिषेयः | तत्र ते ईजिरे सत्रं नैमिषे ब्रह्मवादिनः । नैमिषे ईजिरे यत्र नैमिषेयास्ततः स्मृताः ॥ | वा पु.पू.2.12 | |
| न्यासः | कुशलाकुशलानां तु प्रहाणं न्यास उच्यते । | लि.पु.पू.10.28 | – – |
| पक्षिराजः | भवत्वेष पतत्रीणामिन्द्रोऽतिबल-सत्त्वान् । | महा.1.27.20 | – – |
| पंक्तिपावनः | 1 यावदेतत्प्रपश्यन्ति पंक्त्यास्तावत्पु-नन्त्युत । ततो हि पावनात्पंक्त्याः पंक्तिपावन उच्यते ॥ | महा.गी.प्रे.अनु. 90 36 | – – |
| | 2 त्रिणाचिकश्च त्रैविद्यो यश्च धर्मान् पठेद् द्विजः । बार्हस्पत्ये तथा शास्त्रे पारं यश्च द्विजो गतः ॥ सर्वे ते पावना विप्राः पंक्तीनां समुदाहृताः ॥ | वा.पु.उ.17.58 | |
| | 3 विद्यावेदव्रतस्नाताः ब्राह्मणा सर्व एव हि । सदाचारपराश्चैव विज्ञेयाः पंक्तिपावनाः······· – ···· — । | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | वेदविद्याव्रतस्नातो विप्रः पंक्तिं पुनात्युत । यावदेते ......उच्यन्ते पंक्तिपावनाः । | (श. क.) | | |
| | अथ चेद् वेदवित् सर्वैः पंक्तिदोषैर्विवर्जितः । न च स्यात् पतितो राजन् पंक्तिपावन उच्यते ।। | पद्म.पु. स्वर्ग 35. | | |
| पञ्चशिखः❀ | 1 पंचस्रोतसि निष्णातः पंचरात्रविशारदः । पंचज्ञः पंचकृत् पंचगुणः पंचशिखः स्मृतः ।। | महा.पा.टि. 12.211.10 | 5 | 10 |
| | 2 जटा वह्निशिखारूपा पञ्च सन्ति च मस्तके । तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः ।। | ब्र.वै ब्र ख. 22.17 | | |
| पंचाप्सरस् | (आख्यानमात्रम्) | महा.गी.प्रे.अनु. 218.11.12 | | |
| | | वा.रा.अरण्य 11.1.20 | – | – |
| पञ्चायतनः | पञ्चानामपि देवानां ब्रह्मादीनां यदाश्रयम् । ओंकारबोधितं लिङ्गं पञ्चायतनमुच्यते ।। | कू.पु.पू. 22.8 | | |
| पंचालः❀ | 1 पंचैते (मुद्गल - संजय - बृहदिषु-यवीनर-कृमिलाश्वाः) रक्षणायालं देशानामिति विश्रुताः । पंचानां विद्धि पंचालान्...... अलं संरक्षणे तेषां पंचाला इति विश्रुताः ।। | हरि 1.32.65,66 | 8 | 5 |
| | 2 तस्मात् (हर्यश्वात्) मुद्गल-सृञ्जय-बृहदिषु - यवीनर-काम्पिल्यसंज्ञाः । पञ्चानामेव तेषां विषयाणां रक्षणायालमेते मत्पुत्राः इति पित्राभिहिताः पञ्चालाः ।। | वि.पु. 4.19.59 | | |
| | 2 यवीनरो बृहदिषुः काम्पिल्यः संजयः सुताः । भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि । विषयाणामलमेते इति पञ्चाल संज्ञिताः ।। | भा.पु. 9.21 32-33 | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 4 पञ्चानां चैव पञ्चालानेतान् जनपदान् विदुः। पञ्चालं रक्षिणो ह्येते देशानामिति नः श्रुतम् ॥ | म.पु. 50.3, 4 | | |
| | 5 पञ्चानां रक्षणार्थाय पितैतानभ्यभाषत। पञ्चालं विद्धि पञ्चैतान् स्फीता जनपदाः युताः। अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः ॥ | वा.पु.उ. 37.193 | | |
| पतिः❀ | 1 पालनाद्धि पतिस्त्वं मे········। | महा. 14.93.26 | 7 | 7 |
| | 2 पालनाद्धि पतिस्तथा — — – गुण स्यास्य निवृत्तौ तु·····—न पतिः पतिः। | महा. 12.258.35 | | |
| | 3 पात्याच्चैव पतिः स्मृतः। | | | |
| | 4 पालनाच्च पतिः स्मृतः। | महा.ग.1.104.30 | | |
| | 5 पालनात्पतिरुच्यते। | ब्र.वै.प्र.ख. 42.24 | | |
| पत्नी❀ | (भर्तव्या) रक्षणीया च पत्नी हि पतिना सदा। | महा.3 67.13 | 7 | 8 |
| पन्नगः | 1 पतत्वात्पन्नगश्चैव। | लि.पु. 70.230 | | |
| | 2 पन्नत्वात्पन्नगश्चैव। | वा.पु. 9.31 | — | — |
| पयोधरा (नदी) | नदी च ··········क्षीरसंकाशसलिलां पयोधरामिति श्रुतिः। | हरि. 3.35 26 | — | — |
| परमः | परमः संप्रकृष्टत्वात्। | लि.पु. 70.98 | — | — |
| | परश्च तु प्रकृतत्वात्। | वा.पु पू.5.34 | | |
| परमर्षिः | 1 निवृत्तिसमकालं तु बुद्ध्या व्यक्तिमृषिस्त्वयम्। ऋषन्ते परमां यस्मात् परमर्षिस्ततः स्मृतः ॥ | म.पु.120/(श.क.) | | |
| | 2 निवृत्तिसमकालं तु बुद्ध्या व्यक्तिमृषिस्त्वयम्। परं हि ऋषते यस्मात् परमर्षिस्ततः स्मृतः ॥ | वा.पु.पू. 59.87 | — | — |
| परमार्थः | परमार्थात्मनोर्योगः परमार्थ इतीष्यते। | अ.पु. 380.43 | — | — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| परमेश्वरः | परत्वात्परमेश्वरः। | कू.पु.पू. 4.60 | — — |
| परस्परोपमा | तुल्यमेवोपमीयते यत्रान्योन्येन धर्मिणा। परस्परोपमा सा स्यात् प्रसिद्धे रन्यथा तयोः ॥ | अ.पु. 344.11 | — — |
| परावहः | येन सृष्टः पराभूतो यात्येव निवर्तते। परावहो नाम परो वायुः। | महा. 315.52 | – – |
| पराशरः | परासुश्च यतस्तेन वसिष्ठः स्थापितस्तदा। गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ | महा. 1.169.3 | – – |
| परिक्षित्ॐ | 1 परिक्षीणे कुले जातो भवत्वयं परिक्षिन्नामेति। | महा. 1.90.92<br>तु.-महा.14.96.10 | 6 12 |
| | 2 परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति। एतदस्य परिक्षित्वं गर्भस्थस्य भविष्यति। | महा. 10.16.3 | |
| परिवहः | यस्मिन् पारिप्लवे दिव्ये वहन्त्यापो विहायसा। | महा. 12.315.46 | – – |
| परिवेदनीया | यया चैव परिवेद्यते। | महा.12.159.63 | – – |
| परीक्षित् | स एव लोकविख्यातः परीक्षिदिति यत्प्रभुः। गर्भदृष्टमनुध्यायन् परीक्षेत परेष्विह ॥ | भा.पु. 1.12.31 | — — |
| पर्जन्यः | गर्ज शब्दे प्रपूर्वस्य धातोः पर्जन्निपात्यते। गर्जत्यतीव यस्माच्च तस्मात्पर्जन्य उच्यते ॥ | साम्ब.पु. 8.34 | — — |
| पर्व | ग्रन्थयन्ति यथा पर्वाणीक्षुवेण्वोर्भवन्त्युत। तथार्द्धमास पर्वाणि शुक्लकृष्णानि वै विदुः ॥ | वा.पु.पू. 56.33 | — — |
| पर्वतः | 1 पर्वभिः पर्वताः स्मृताः। | लि.पु. 70.135;<br>वा.पु.पू.8.11; 6.30 | |
| | 2 पर्वबन्धाच्च पर्वताः। | म.पु. 123.36 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| पशु: | 1 परिग्रहविनिर्मुक्तास्ते सर्वे पशवोदिता: । पशुभि: प्रेरिता ये तु सर्वे ते पशव: स्मृता: ।। | लि.पु.उ. 20.38 | — — |
| पशुपति:※ | 1 सर्वथा यत्पशून् पाति तैश्च यद् रमते सह । तेषामधिपतिर्यश्च तस्मात् पशुपति: स्मृत: ।। | महा. 7.173.82 तु.-महा.गी.प्रे.अनु. 145 दा. 18 | 3 20 |
| | 2 ग्राम्यारण्यानां त्वं पतिस्त्वं पशूनां ख्यातो देव: पशुपति: सर्वकर्मा । | हरि 2.74.34 | |
| | 3 ब्रह्माद्या: स्थावरान्ताश्च देवदेवस्य शूलिन: । पशव: परिकीर्त्यन्ते ससारवशवर्तिन: । तेषां पतित्वाद् भगवान् रुद्र: पशुपति: स्मृत: ।। | लि.पु.उ. 9.12 | |
| | 4 अहञ्च सर्वविद्यानां पतिराद्य: सनातन: । अहं वै पतिभावेन पशुमध्ये व्यवस्थित: । अत: पशुपतिर्नाम त्वं लोके ख्यातिमेष्यसि ।। | वा.पु. (श.क.) | |
| | 5 देवादय: पिशाचान्ता: पशव: परिकीर्तिता: । तेषां पतित्वात् सर्वेशो भव: पशुपति: स्मृत: ।। | लि.पु.पू. 7.54 | |
| पशुसख: | 1 सखा सखे य: सख्येय: पशूनां च सखा सदा । गौणं पशुसखेत्येवं विद्धि मामग्निसंभवे ।। | महा. 13.95.43 | – – |
| | 2 पशून् रंजामि दृष्ट्वाऽहं पशूनां च सदा सखा । गौणं पशुसखेत्येवं विद्धि मामग्निसम्भवे ।। | महा.गी प्रे.अनु. 93.100 | |
| पाञ्चजन्य: (शङ्ख:) | 1 तत्र पंचजनं हत्वा — ·····आजहार तत:····· — शंङ्खं च पुरुषोत्तम: ।। | वा रा.कि.42.28 | – – |
| | 2 स तु पंचजनं हत्वा शंङ्खं लेभे जनार्दन: । यस्तु देव-मनुष्येषु पांचजन्य:·········।। | हरि. 2.33.17 तु.-201.67 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 इत्युक्तोऽन्तर्जलं गत्वा हत्वा पञ्चजनं च तम् । कृष्णो जग्राह तस्यास्थि-प्रभवं शङ्खमुत्तमम्…… —तं पाञ्च-जन्यमापूर्य गत्वा यमपुरं हरिः ॥ | वि.पु. 5.21.28-30 | |
| (अग्निः) | 4 पंचवर्णः सुतपसा कृतस्तैः पंचभिः जनैः । पांचजन्यः श्रुतो देवः पंचवंशकरस्तु सः । | महा. 3.210.5 | — — |
| पाण्डुः | यस्मात्पाण्डुत्वमापन्ना ……तस्मादेष सुतस्तुभ्यं पाण्डुरेव भविष्यति । नाम चास्य तदेवेह भविष्यति शुभानने ॥ | महा. 1.100.17½ | — — |
| पात्रं | पतनात्त्रायते यस्मात् तस्मात् पात्रं जनार्दन । | अ.पु. 159.5 | |
| पादपः | वक्त्रेणोत्पलनालेन यथोर्ध्वं जल-माददेत् । तथा पवनसंयुक्तः पादैः पिबति पादपः ॥ | महा. 12.177.16 | — — |
| पाद्मं (पुराणं) | पद्मकल्पस्य माहात्म्यं तत्र यस्मादुदा-हृतम् । तस्मात्पाद्मं समाख्यातं पुराणञ्च द्वितीयकम् ॥ | शि.पु. उ.ख. 5 44.126 | — — |
| पाराशर्यः (व्यासः) | पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा । जज्ञे च यमुनाद्वीपे पाराशर्यः…॥ | महा. 1.57.59 | — — |
| पारिजातः❀ | पारिजातो विष्णुपद्याः पारिजातेति शब्दितः । | हरि. 2 67.70 | 8 20 |
| पारीक्षितः (जनमेजयः) | इति पारीक्षितो राजा……—। | तत्रैव 2.128.40 | — — |
| पार्थः | तस्मै (कुन्तये) चापुत्राय पृथामात्मजां निधिना शूरो दत्तवान् । तां च पाण्डुरुवाह । | वि.पु. 4.14.32-34 | |
| पार्थिवः | क्षमया धारयन् लोकान् पार्थिवः पार्थिवो भवेत् । | अ.पु. 226.20 | |
| पार्वती | 1 मेनायामभवत्पुत्री तदा हिमवतः सती । स चापि पर्वतवरो ददौ | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | रुद्राय पार्वतीम् । ख्यातौ तेषु च विख्याता पार्वती तेन कीर्तिता । | कू पु.पू. 11.12 | |
| | 2 पर्वतस्य सुता देवी साविर्भूता च पर्वते । पर्वताधिष्ठातृदेवी पार्वती तेन कीर्तिता ।। | ब्र.वै.-प्र.ख. 56.47,57.26 | — — |
| | 3 महोत्सवविशेषे च पर्वन्निति-सुकीर्तिता । तस्यधिदेवी या सा पार्वती परिकीर्तिता ।। | ब्र.वै.-प्र.ख. 56.46, 57.25 | |
| पार्श्वमौलिः (यक्षः) | ❀ तस्य (मणिभद्रस्य) तेन प्रहारेण मुकुटं पार्श्वमागतम् । .... तदा प्रभृति यक्षोऽसौ पार्श्वमौलिरिति स्मृतः ।। | वा.रा.उत्तर 15.15 | 4 5 |
| पालकः | पालकश्चापि पालनात् ।<br>..............वर्णकस्याभिपालनात् ।<br>आदित्यसंज्ञः कपिलो....... । | लि.पु. 70.105<br><br>वा.पु.पू. 5 41.42 | — — |
| पावकः | पावनात्पावकश्चासि........। | महा. 2.28.28 | — — |
| पाशुपत | 1 अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः । सर्वे पाशुपता ज्ञेया....। | महा. 13. अपे. 15.4351 | — — |
| | 2 व्रतं पाशुपतं चैव स्वयं देवो महेश्वरः । उपदिश्य मुनीनाञ्च सहस्ते चाम्बया भवः । तदाप्रभृति ते देवाः सर्वे पाशुपताः स्मृताः । पशूनां च पतिर्यस्मात् तेषां साक्षाद्धि देवताः । तस्मात्पाशुपताः प्रोक्ता तपस्तेपुश्च ते पुनः । ततो द्वादश-वर्षान्ते मुक्तपाशाः सुरोत्तमाः ।। | लि.पु.पू.80.55-57 | |
| पितरः | 1 पितरो ह्युपपक्षाभ्यां रात्र्यह्नो-रन्तरेऽभवन् । तस्मात्ते पितरो देवा पितृत्वं तेन तेषु तत् ।। | लि.पु. 70.208 | |
| | 2 पितृवन्मन्यमानस्तान् पुत्रान् प्राध्या-पयत प्रभुः । पितरो ह्युपपक्षाभ्यां रात्र्यह्नोरन्तराऽसृजत । तस्मात्ते पितरो देवा पुत्रत्वन्तेन तेषु तत् ।। | वा.पु.पू. 9.11 | — — |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| पिता❀ | 1 भृत्यानां भरणात्सम्यक् प्रजानां परिपालनात् । अर्थादानाच्च धर्मेण पिता——....।। | वा.रा.अयो. 105.33 | 7 | 9 |
| | 2 रक्षणाच्च पिता नृणाम् । | ब्र.वै.ग.ख. 54. | | |
| पितामहः | जगतः पितृभूतानां शिवो मूर्त्यात्मनामपि । पितृभावेन सर्वेषां पितामह उदीरितः ।। | शि.पु. 6.9.16 | – | – |
| पितृयज्ञः | 1 एकन्तु भोजयेद् विप्रं पितॄनुद्दिश्य सन्ततम् । नित्यश्राद्धं तदुच्छिष्टं पितृयज्ञो गतिप्रदः ।। | कू.पु.उ. 18.108 | | |
| | 2 पितॄनुद्दिश्य यद्दत्तं पितृयज्ञः स उच्यते । | लि.पु.पू. 26.19 | – | – |
| पिनाकं | आनतेनाथ शूलेन पाणिनामिततेजसा । पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ।। | महा. 12.278.18 | – | – |
| पिप्पलादः | पिप्पलैः पालितो यस्मात्पिप्पलादः स बालकः । | ब्र.पु. 110.80 | – | – |
| पिपीलिकं | तद् वै पिपीलिकं नाम वरदत्तं पिपीलिकैः । | महा. 2.48.3½ | – | – |
| पिशाचः | पिशाचाः पिशिताशनात् । | लि.पु. 70.233 | | |
| पीतकल्पः | यदाऽहं पुनरेवेह पीतवर्णो युगक्रमात् । यत्कृतेन च नाम्ना वै पीतकल्पोऽभवत्तदा ।। | लि.पु.पू. 23.13 | – | – |
| पुण्डरीकाक्षः | पुण्डरीकं परं धाम नित्यमक्षयमक्षरम् । तद्भावात्पुण्डरीकाक्षः । | महा. 5.68.6 | – | – |
| पुण्यकः | कर्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं सौम्ये पुण्यकैः समुदाहृतम् ।। | हरि. 2.78.17 | – | – |
| पुत्र❀ | 1 पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः पितॄन् यः पाति ।। | वा. रा. अयो. 107.12. | 7 | 10 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा । | महा. 1.68.38 | — |
| | 3 त्रायन्ते नरकाज्जाताः पुत्राः धर्मप्लवाः पितॄन् । | महा. 1.69.19 | |
| | 4 पुन्नाम्नो नरकात्पुत्रस्त्रातीति पितरं मुने । | महा. 1.220.14 | |
| | 5 अपत्यमस्मि ते पुत्र (पुत्त) स्त्राणात्पुत्रो हि विश्रुतः । आत्मा पुत्रः स्मृतः.........। | महा. 14.९६.37 | |
| | 6 सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः । | महा. 1.147.5 | |
| | 7 त्रातः स पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा । | हरि. 1.5.25 | |
| | 8 पुन्नाम्नो नरकात्पुत्रो यस्मात्त्राता पितॄंस्तदा । तस्माद् ब्रुवन्ति पुत्रेति पुत्रं..........। | तत्रैव 2.23.20 | |
| | 9 नरकं पुदिति ख्यातं दुःखं च नरकं विदुः । पुदस्त्राणात्ततः पुत्रमिहेच्छति परत्र च ।। | तत्रैव 3.73.29½ | |
| | 10 पितॄन्नृणात् तारयति पुत्र इत्यनुशुश्रुम । | तत्रैव 14.93.71 | |
| | 11 तमुत्पन्नेन राजर्षिः स सत्पुत्रेण धीमता । पुरुषव्याघ्रः पुन्नाम्नो नरकात्त्रायते ततः ।। | वा.पु.उ. 1.129 | |
| | 12 पुन्नाम्नो नरकात्त्राति इति पुत्रेत्विहोक्तितः । | लि.पु.पू. 5.31 | |
| | 13 पुन्नाम्नो नरकात् त्रातः सुतेन सुमहात्मना । | वि.पु. 1.13.42 | |
| | 14 पुमिति नरकस्याख्या दुःखं च नरकं विदुः । | | |
| | 15 पुंसस्त्राणान्वितं पुत्रं तथाभूतं प्रसूयते ।। | लि पु पू 89.13 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 16 पुन्नाम्नो नरकात् त्राति पुत्रस्तेनेह गीयते । | वामन पु. 60.76 | |
| | 17 पुं नाम नरकं घोरं विनाशयति सर्वतः । एतस्मात्कारणात् साध्यः ततः पुत्रेति गद्यते । | वामन पु. 61.20 | |
| | 18 पुन्नाम्नो नरकाद् यस्मात्पितरं त्रायते तु यः। | ग.पु.उ.ख.11.38 | |
| | 19 कोऽयं पुन्नामको देवनरकात् त्रायते पुत्रकः । | वामन पु.60.77 | |
| पुरञ्जय: | पुरं जितं तु दैत्यानां तेनाभूच्च पुरञ्जय । | दे.भा. 7.9.28 | — — |
| पुराकल्प: | यो ह्यत्यन्ततरोक्तश्च पुराकल्पः स उच्यते । पुरा विक्रान्तवाचित्वात् पुराकल्पस्य कल्पिता ॥ | वा.पु.पू. 59.118 | — — |
| पुराणं | 1 पुरा परम्परां वष्टि (वक्ति) पुराणं तेन तत् स्मृतम् । | पद्म पु. 1.2.53 | |
| | 2 यस्मात् पुरा ह्यनतीदं पुराणं तेन तत्स्मृतम् । | वा.पु.पू. 1.183 | |
| | 3 पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः । | मं.पु. 5.3.63 | |
| | 4 यस्मात् पुरा ह्यनन्तीदं पुराणं तेन चोच्यते । | वा.पु.उ. 41.55 | — — |
| | 5 यस्मात् पुरा ह्यभूच्चैतत् पुराणं तेन तत् स्मृतम् ॥ | ब्र.पु. 1.1.173 | |
| पुरुषः❋ | 1 नवद्वारं पुरं पुण्यं ···· – व्याप्य शेते महानात्मा तस्मात् पुरुष उच्यते ॥ | महा.12.203.35 | 7 11 |
| | 2 देहेऽस्मिन् पुरुषः परः— ···· | महा.गीता 13.22 | |
| | 3 परं विषहते यस्मात् तस्मात् पुरुष उच्यते । | महा. 5.131.33 | |
| | 4 पुरं विषहते यस्मात् तस्मात् पुरुष उच्यते । | महा. 5.131.35 | |
| | 5 पूरणात्सदनाच्चैव — —। | महा. 5.68.10 | |
| | 6 भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् । स्वांशेन | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ | मा.पु. 11.4.3 | |
| | 7 यस्मात्पुर्यां स शेते च तस्मात्पुरुष उच्यते । | लि.पु. 70.103 | |
| | 8 यस्मात्पुर्यनुशेते च तस्मात् पुरुष उच्यते । | वा.पु.पू. 4.41, 5.40 | |
| | 9 पुरि शेते तथाभ्रे च तस्मात् पुरुष उच्यते । | वा.पु.पू. 14.15 | |
| | 10 अत्र शेते च यत्पुर्यां क्षेत्रज्ञानमथापि वा । पुरीशयत्वात् पुरुषः क्षेत्रज्ञानात्समुच्यते । | वा.पु.पू. 59.76 | |
| | 11 यस्मात्पुर्यनुशेते च तस्मात् पुरुष उच्यते । पुरप्रत्ययिको यस्मात् पुरुषेत्यमिधीयते ॥ | वा.पु.उ.40.116 | |
| | 12 पुरे शयनात् पुरुषः ……। | म.पु. 145.78 | |
| | 13 स वै शरीरी प्रथमः स वै पुरुष उच्यते । | मा.पु. 45.64<br>कू.पु.पू. 4.38 | |
| | 14 पवनो हि यथा ग्राह्यो विरचन् सर्वमूर्तिषु । पुरि शेते सुदुर्ग्राह्यस्तस्मात्पुरुष उच्यते ॥ | लि.पु.पू. 88.46 | |
| | 15 पुरुषोऽसि पुरि शेषे त्वमङ्गुष्ठप्रमाणतः । | लि.पु.पू. 88.88 | |
| | 16 पुरि शेते पुरं देहं तस्मात् पुरुष उच्यते । | लि.पु.पू. 28.5 | |
| | 17 पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः । शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ | भा.पु. 7.14.37 | |
| पुरुषोत्तमः | 1 पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः । | महा. 5.68.10 | |
| | 2 ……अक्षरादपि चोत्तमः । अतोऽस्मिन् लोके वेदे च प्रथितः पुरुषोत्तमः ॥ | महा. 6.37 18<br>(गीता 15.18) | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| पुरूरवाः | जातमात्रः सुतो रावमकरोत् स पृथुस्वरम् । तेन सर्वेऽवोचन् वै संगता ऋषयः सुराः ।। यस्मात्पुरूरवोऽस्येति पुरूरवाः । स्यादित्येवं नाम चक्रुः सर्वे-सन्तुष्टमानसाः ।। | ब्रह्म 108.73, 74 | — — |
| पुलस्त्यः | 1 पुलः तपः समूहश्च यस्यास्ति सर्व जन्मनाम् । तपःसंघस्वरूपश्च पुलस्त्यस्तेन कीर्तितः ।। | ब्र.वै.ब्र.ख. 22.15 | |
| | 2 केशश्च निशितैर्भूतः पुलस्त्यस्तेन स स्मृतः । | वा.पु.उ. 4.45 | |
| पुलहः | 1 केशैर्लम्बैः समुद्भूतस्तस्मात्तु पुलहः स्मृतः । | वा.पु.उ. 4.45 | |
| | 2 पुल. तपः सु वेदेषु वर्तते हः स्फुटेऽपि च । स्फुटस्तपः – समूहश्च पुलहस्तेन बालकः ।। | ब्र.वै.ब्र.ख. 22.14 | — — |
| पुष्कलावर्त | पुष्कलं पुष्कलावते । | वा.रा.उत्तर101.11 | — — |
| पूः | 1 यः पूरयति यस्माच्च कृत्स्नान् देवाननुग्रहैः । नयते तत्त्वभावञ्च तेन पूरिति चोच्यते ।। | लि.पु. 70.17 | |
| | 2 आपूरयित्वा यस्माच्च कृत्स्नान् देहाननुग्रहैः । नयते तत्त्वभावांश्च नियतांस्तेन चोच्यते ।। | वा.पु.पू. 4.30 | — — |
| परकः | 1 पूरणात् पूरको वायुः । | अ.पु. 161.22 | |
| | 2 बाह्येन वायुना देहं दृतिवत् पूरयेद् यथा । तथा पूर्णश्च सन्तिष्ठेत् पूरणात् पूरकः स्मृतः ।। | अ पु. 373.8 | |
| | 3 उदरं पूरयेत् तावद् वायुना यावदीप्सितम् । प्राणायामो भवेदेष पूरको देहपूरकः ।। | अ.पु. 214.21 | — — |
| पूर्णिमा | 1 यदीक्षते व्यतीपाते दिवा पूर्णे परस्परम् । चन्द्रार्कावपराह्णे तु पूर्णात्मानौ तु पूर्णिमा । | वा.पु.पू. 56.41 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 सम्पूर्णमण्डलः श्रीमांश्चन्द्रमा उपरज्यते । यस्मादाप्यायते सोमः पञ्चदश्यान्तु पूर्णिमा ॥ | वा.पु.पू. 56.56 | — — |
| पूषा | यस्मात् सिञ्चति लोकांस्त्रीन् भूर्भुवः स्वोमृतादिभिः । पुष पुष्टौ स्मृतो धातुस्तस्मात्पूषा स उच्यते । | साम्ब.पु. 8.35 | — — |
| पृथुः | 1 यत्नतः प्रथितेत्यूचुः सर्वानभिभवन्पृथुः । | महा. ग. द्रोण 69.2 | - - |
| | 2 प्रथयिष्यति वै लोकान् पृथुरित्येव शब्दितः । | महा. 12.29.130 | |
| | 3 आत्मानं प्रथयित्वाऽहं प्रजां धारयिता चिरम् । | हरि. 1.6.5 | |
| | 4 गतासोस्तस्य (वेनस्य) भूयस्ते ममन्थुर्दक्षिणं करम् ।............जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥ | भा.पु. 4.13.20 | |
| | 5 तस्यैव दक्षिणं हस्तं ममन्थुस्ते ततो द्विजाः । मथ्यमाने च तत्राभूत्पृथुर्वैन्यः प्रतापवान् ॥ | वि.पु. 1 13.39 | |
| | 6 पृथुस्तस्मात्समुत्पन्नः करास्फालनतेजसः । पृथोः करतलाद्वापि यस्माज्जातः पृथुस्ततः ॥ | वा.पु.उ. 1.126 | |
| | 7 ——पुनर्ममन्थुस्ते विप्रा दक्षिणं पाणिमेव च । (सु) स्वकरात्पुरुषो जज्ञे द्वादशादित्यसन्निभः ॥ | पद्म.पु.भूमि 28.48 | |
| पृथ्वी-पृथिवी | ❀1 प्रथिता धनतः (धर्मतः) चेयं पृथिवी बहुभिः स्मृता । | महा.12.59 128 | 8 7 |
| | 2 ततोऽभ्युपगमात् राज्ञः पृथोर्वैन्यस्य भारत । दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते ॥ | हरि. 1 6.46 | |
| | 3 पृथ्वीयं पृथुकन्यत्वात् । | ब्र वै प्र.ख 9.23 | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | 4 पृथ्वीयं (पृथिवी) पृथुकन्यात्वाद्विस्तृतत्वान्मही मुने । | ब्र.वै.प्र.ख.10.33 | | |
| | 5 प्राणप्रदाता स पृथुर्यस्माद्भूमेरभूत्पिता । ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ।। | वि.पु. 1.13.89 | | |
| | 6 दुहितृत्वं गता यस्मात्पृथोर्धर्मवतो मही । तदानुरागयोगाच्च पृथिवी विश्रुता बुधैः ।। | म.पु. 10.35 | | |
| | 7 दुहितृत्वमनुप्राप्ता पृथिवीत्युच्यते ततः । | वा.पु.उ. 2.3 | | |
| | 8 पृथुना प्रविभक्ता च शोधिता च वसुन्धरा । | अ.पु. (श.क.) | | |
| | 9 पृथ्वी विस्तारयोगतः । | दे.भा. 3.13.8 | | |
| पृश्निगर्भः❀ (कृष्णः) | 1 पृश्निरित्युच्यते चान्तं वेदा आपोऽमृतं तथा । ममैतानि सदा गर्भे पृश्निगर्भस्ततो ह्यहम् ।। | महा. 12.328.40 | 3 | 21 |
| | 2 अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम् । अहं सुतो वां (देवकी-वसुदेवयोः) अभवं पृश्निगर्भ इति श्रुतः।। | भा.पु 10.3.41 | | |
| पौरुषं | यत्स्वयं कर्मणा किंचित् फलमाप्नोति पूरुषः । प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम् ।। | महा. 3.33.16 | – | – |
| पौर्णमासी | यस्मान्मनसि सम्पूर्णो ब्रह्मणः परमेष्ठिनः । पुरा वै भगवान् सोमः पौर्णमासी ततः स्मृतः ।। | वा.पु.पू.21.62 | – | – |
| पौलस्त्यः | इत्येते क्रूरकर्माणः पौलस्त्याः राक्षसा दश । | कू.पु.पू.20.14 | – | – |
| प्रकृतिः | 1 प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता । गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्तते श्रुतौ । | | | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| | मध्यमे रजसि कृश्च तिशब्दस्तमसि स्मृतः ।। त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता । प्रधाना सृष्टि-करणे प्रकृतिस्तेन कथ्यते ।। प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता ।। | ब्र.वै.प्र.ख. 1.5-8 | | |
| | 2 सत्त्वं रजस्तमश्चैव गुणत्रयमुदा-हृतम् । सम्यगवस्थितिरेतेषां प्रकृतिः परिकीर्तिता । केचित्प्रधानमित्या-हुरव्यक्तमपरे जगुः । एतदेव प्रजा-सृष्टिं करोति विकरोति च ।। | म.पु. 3.14, 15 | – | – |
| प्रचिन्वान् | प्रचिन्वांस्तु सुतस्तस्य (जनमेजयस्य) यः प्राचीमयजद् दिशम् । | हरि. 1.31.5 | – | – |
| प्रचेताः | यः पुत्रश्चेतसा धातुर्बभूव मुनिपुङ्गव । तेन प्रचेता इति च नाम चक्रे पितामहः। | ब्र.वै.ब्र.ख. 22.3 | – | – |
| प्रजा | प्रजापतय एते हि प्रजाभागैरिह प्रजाः । | महा.गी.प्रे.85.134 | – | – |
| प्रजापतिः❀ | 1 प्रजापतय एते हि प्रजाभागैरिह प्रजाः । | गी.प्रे.अनु. 85.134 | 3 | 22 |
| | 2 त्वं प्रजापतिरसंशयम् । प्रजाश्च पालयिष्येऽहमति ते समयः कृतः ।। | हरि. 1.5.10 | | |
| | 3 कलया स प्रजापतिः । | ब्र.वै.ग.ख.45.60 | | |
| | 4 पाति यस्मात्प्रजाः सर्वाः प्रजापति रिति स्मृतः । | कू.पु.पू. 4.59,लि.पु. 70.101,वा.पु.5.37 | | |
| | 5 विश्वे प्रजानां पतयो येभ्यो लोकाः विनिःसृताः । | म.पु. 1.1.25 | | |
| प्रज्ञा | यस्माज्ज्ञानानुगश्चैव प्रज्ञा तेन स उच्यते । | लि.पु. 70.21 | – | – |
| प्रणवः | 1 प्रो हि प्रकृतिजातस्य संसारस्य महोदधेः । नवं नवान्तरमिति प्रणवं वै विदुर्बुधाः ।। प्र प्रपञ्चो न | | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | नास्ति वो युष्माकं प्रणवं विदुः । प्रकर्षेण नयेद्यस्मान्मोक्षं वः प्रणवं विदुः ॥ | शि.पु. 1.17.4-5 | |
| | 2 ब्रह्मादिस्थावरान्तानां सर्वेषां प्राणिनां खलु । प्राणः प्रणव एवायं तस्मात्प्रणव ईरितः ॥ | शि.पु. 6.3.14 | |
| प्रतिग्रहः | उरस्यादीनि भिन्नानि प्रतिगृह्णन् बलानि हि । प्रतिग्रह इति ख्यातो राजकार्य्यान्तिरक्षमः ॥ | अ.पु. 242 32 | – – |
| प्रतिभा (सिद्धिः) | प्रतिभा प्रतिभावृत्तिः प्रतिभाव इति स्थितिः । | लि.पु.पू. 9.16 | |
| प्रतिविन्ध्यः | शास्त्रतः प्रतिविन्ध्यं··· परप्रहरणाज्ञाने प्रतिविन्ध्योऽभवत्ययम् । | महा.1.213-74 | – – |
| प्रतिहर्ता | प्रतीहारस्तदन्वयः । प्रतिहर्तेति विख्यातः उत्पन्नस्तस्य चात्मजः । | कू.पु.पू. 40.42 | – – |
| प्रत्याहारः | 1 निवृत्तिर्विषयाणान्तु प्रत्याहारस्तु संज्ञितः । | वा.पु.पू. 11.29 | – – |
| | 2 शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः । प्रत्यह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ | मा.पु. 39.42 | |
| प्रद्युम्नः | 1 यः मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते । | महा. 12.326-36 | – – |
| | 2 संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते । | महा. 12.326.39 | |
| | 3 प्रतिव्यूहेन तिष्ठन्ति सदेवासुर-राक्षसाः । प्रविद्युः सर्वधर्माणां प्रद्युम्नस्तेन चोच्यसे ॥ | म.पु. 248.48 | |
| | 4 तस्यां जज्ञे च प्रद्युम्नो मदनांशस्य वीर्यवान् । | वि.पु. 5.26.12 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| प्रभाकरः (सूर्यः) | 1 भा दीप्तावित्ययं धातुश्चोपसर्गेण योजितः । भास्करोति प्रकर्षेण यस्मात्तस्मात् प्रभाकरः ॥ | साम्ब. पु. 8.23 | |
| (अत्रिः) | 2 स्वर्भानुपिहिते सूर्ये पतितेऽस्मिन् दिवो महीम् । तमोऽभिभूते लोके ऽस्मिन् प्रभा येन प्रवर्तिता ॥ स्वस्त्यस्तु हि तवेत्युक्ते पतन्निह दिवाकरः। ब्रह्मर्षेर्वचनात्तस्य पपात न विभुर्दिवः । ततः प्रभाकरेत्युक्तः प्रभुरत्रिर्महर्षिभिः ॥ | लि.पु.पू. 63.71-73 | |
| प्रभातं | 1 प्रभा प्रभातं……… । | कू.पु.पू. 20.3 | – – |
| | 2 प्रभा प्रभातमादित्यात् । | लि.पु.पू. 65.4 | |
| प्रभावती | नाम्ना प्रभावती नाम चन्द्रामेव प्रभावती । | हरि. 2.91.41 | – – |
| प्रभासः | 1 सर्वं जगद् भासयते……एवं तु तीर्थ-प्रवरं पृथिव्यां प्रभासनात्तस्य ततः प्रभासः । | महा. 9.34.37 | – – |
| | 2 प्रभां हि परमां लेभे तस्मिन्नुन्मज्य चन्द्रमाः । | महा. 9.34.77 | |
| | 3 तत्र चावभासितस्तीर्थे यदा सोम-स्तदाप्रभृति तीर्थं तत् प्रभासमिति नाम्ना ख्यातं बभूव ॥ | महा. 12.329. 46 (10) | |
| | 4 विमुक्तशापःपुरात्मतेजः सर्वं जगत् भासयते नरेन्द्र । सर्वे तु तीर्थप्रवरः पृथिव्याः प्रभासनात्तस्य ततःप्रभासः॥ | महा चि. गदापर्व 35.41–42 | |
| | 5 भासितो भास्करेणेति प्रभासः परिकल्पितः । | वा.पु.उ. 46-13 | |
| प्रभासेशः | सर्वदेवमयं लिङ्गं स्थापितं तत्र पाण्डव । प्रभासेशं इति ख्यातं सर्वलोकेषु दुर्लभम् ॥ | स्कन्द.रेवा.98.16 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| प्रमद्वरा | प्रमदाभ्यां वरा सा तु सर्वरूप-गुणान्विता । ततः प्रमद्वरेत्यस्याः नाम चक्रे महानृषिः । | महा. 1.8.10 | 4 | 3 |
| प्रयागः | 1 यत्रायजत भूतात्मा पूर्वमेव पिता-महः । प्रयागमिति विख्यातं तस्माद्……… । | महा. 3.85.14 | – | – |
| | 2 एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् । | म.पु. 102. (श. क.) | | |
| प्रवहः | 1 प्रेरयत्यभ्रसंघातान् धूमजांश्चोष्म-जांश्च यः । प्रथमः प्रथमे मार्गे प्रवहो नाम सोऽनिलः ।। | महा. 12.315.36 | – | – |
| | 2 (य) तस्माज्ज्योतींषि वहते प्रवह-स्तेन स स्मृतः । | वा.पु.पू. 52.89 वि.पु. 2.12.28 | | |
| | 3 यस्माद् वहति तान् वायुः प्रवह-स्तेन सः स्मृतः । | कू.पु.पू 43.31 | | |
| प्रशंसा | प्रपूर्वाच्छंशतेर्धातोः प्रशंसा गुणवत्तया । | वा.पु.पू. 59.110 | -- | -- |
| प्रसादः (प्राणायाम-भेदः) | 1 यान्ति प्रसादं येनास्य मनः पञ्च च वायवः । इन्द्रियाणीन्द्रियार्थश्च स प्रसाद इति स्मृतः ।। | मा. पु. 39.26 | – | – |
| | 2 इन्द्रियाणीन्द्रियार्थांश्च मनः पञ्च च मारुतान् । प्रसादयति येनासौ प्रसाद इति संज्ञितः ।। | वा.पु.पू. 11.10 | | |
| प्रसेनः | प्रसेनश्चाथ सत्राजिच्छत्रुसेनाजितावुभौ । | हरि. 1.26.13 | – | – |
| प्राकृतः (कालः) | 1 प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् । तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसञ्चरः ।। | वि.पु. 1.2.25 | – | – |
| | 2 यदा तु प्रकृतौ याति लयं विश्वमिदं जगत् । तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः ।। | मा.पु. 46.3 | | |
| प्राचीनबर्हिः | प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने । प्राचीनबर्हिरभवत्ख्यातो भुवि महाबलः ।। | वि.पु. 1.14.4 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| प्राणः (प्राणः) | 1 प्राणान् प्रणीयते प्राणी । | महा.12.177.24 | – – |
| | 2 प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते । | महा. 12.315.35 | |
| | 3 प्राणः स प्रथमं स्थानं वर्धयन् परिवर्तते ॥ | महा. 1.40.55 | |
| | 4 प्राणस्तु प्रथमो वायुर्दशानामपि स प्रभुः । प्राणः प्राणयते प्राणं विसर्गात् पूरण प्रति । नित्यमापूरयत्येष प्राणिनामुरसि स्थितः । निःश्वासोच्छ्वासकासैस्तु प्राणो जीवसमाश्रितः । प्रयाणं कुरुते यस्मात् तस्मात् प्राणः प्रकीर्तितः ॥ | अ.पु. 214.6-8 | |
| | 5 प्रयाणं कुरुते तस्माद्वायुः प्राण इति स्मृतः । | लि.पु.पू. 8.63 | |
| प्राणायामः | 1 प्राणायामगतिश्चापि प्राणस्यायाम उच्यते ।................प्राणानाञ्च निरोधस्तु स प्राणायाम-संज्ञितः ॥ | वा.पु.पू. 10.73,74 | |
| | 2 प्राणापानसमारोधात् प्राणायामः स उच्यते । | वा.पु.पू. 11.28 | |
| | 3 प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् । प्राणायामः स विज्ञेयः............। | वि.पु. 6.7.40 | |
| | 4 प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् । | अ.पु. 373.6 कू.पु.उ. 11.30 | |
| | 5 त्रिजपेदायतप्राणः प्राणायामोऽथ नामतः । | कू.पु.उ. 11.35 | |
| | 6 प्राणापाननिरोधस्तु प्राणायाम उदाहृतः । | मा.पु. 39.12 | |
| | 7 प्राणानामुपसंरोधात् प्राणायाम इति स्मृतः । | मा.पु. 39.40 | |
| | 8 प्राणः स्वदेहजो वायुर्यमस्तस्य निरोधनम् । | लि.पु.पू. 8.14 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| प्राणिद्यूत | पञ्चक्रीडावयोभिश्च प्राणिद्यूत-समाह्वयः । | अ.पु. 253.29 | – – |
| प्रासादः | प्रसीदति मनस्तासु मनः प्रसादयन्ति ताः (शालाः) । तस्माद्गृहाणि शालाश्च प्रासादाश्चैव संज्ञिताः ।। | वा.पु.पू. 8.122 | |
| प्रियः | प्रीतिदानात् प्रियः परः । | ब्र.वै.प्र.ख. 42.25 | – – |
| फल्गुनः (फाल्गुनः) | उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा । जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ।। | महा. 4.39.14 | – – |
| बन्धुः | बन्धुश्च सुखबन्धाय । | ब्र.वै.प्र.ख. 42 25 | |
| बलं(बलरामः) | बलं बलवदुच्छ्रयात् । | भा.पु. 10.2.13 | |
| बलदेवः | बलदेवो बलोद्रेकात् । | ब्र.वै.कृ.ख. 13.82 | – – |
| बलाश्वः | बलं करन्धमस्तस्मात् स बालोश्वोऽभिधीयते । | मा.पु. 121.16 | |
| वहुरूपः (रुद्रः) | यदस्य बहुधा रूपं··· ········ ····— बहुरूपस्ततः । | महा. 7.173.86; तु.-महा.गी.प्रे.अनु. 161.11½ | – – <br> – – |
| बहूपमा | यत्रोपमा स्याद् बहुभिः सदृशैः सा बहूपमा । | अ.पु. 344.14 | |
| बालः (केशः) | व्यालात्मानः स्मृता बालाः । हीना मच्छिरसो व्याला यस्माच्चैवापसर्पिताः । | लि.पु. 70.230 <br> वा.पु.पू. 9.31 | – – |
| बाह्लीकः | द्र.—वाह्लीक (बाह्लीकः-बाह्लिकः) | महा 1.177.19 | – – |
| बीजं | अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैत्र बीजं तदभिधीयते ।। | अ.पु. 338.22 | |
| बीभत्सुः❀ (अर्जुनः) | न कुर्यां कर्म बीभत्सं युध्यमानः कथंचन । तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः ।। | महा. 4.39.16 | 6 13 |
| बुधः | 1 ततस्तं मूर्ध्न्युपाघ्राय सोमो धाता प्रजापतिः । बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।। | हरि. 1.25.45 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 तस्यात्मयोनिरकृत बुध इत्यभिधां नृप । बुध्या गम्भीरया येन पुत्रेणा-पोडुराण्मुदम् ।। | भा.पु. 9.14.14 | |
| | 3 ततः स तमुपाघ्राय सोमो दाता प्रजापतिः । बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।। | वा.पु.उ. 29.43 | |
| | 4 ततः••••·····भगवानुडपतिः कुमार-मालिङ्ग्य साधु साधु वत्स प्राज्ञो-ऽसीति 'बुध' इति तस्य च नाम चक्रे ।। | वि.पु. 4.6.33 | – – |
| बुद्धः | एतद् बुद्ध्वा भवेत् बुद्धः किमन्यद् बुधलक्षणम् । | महा. 12.241.11 | – – |
| बुद्धिः | 1 बुद्ध्यते पुरुषश्चात्र सर्वान् भावान् हितं तथा । यस्माद् बोधयते चैव बुद्धिस्तेन निरुच्यते ।। | लि.पु. 70.18 | |
| | 2 बुद्ध्यते पुरुषश्चात्र सर्वभावान् हिताहितान् । यस्माद्बोधयते चैव तेन बुद्धिः निरुच्यते ।। | वा.पु.पू. 4.31 | |
| | 3 अर्थं बोधयते यच्च बुद्ध्यते बुद्धि-रुच्यते । | लि.पु.पू. 8.74 | |
| | 4 बुद्धिर्विवेचना वेद्यं बुद्धयते बुद्धि-रुच्यते । | लि.पु.पू. 9.17 | |
| | 5 बुद्धिर्विवेचनारूपा सा ज्ञानजननी श्रुतौ । | ब्र.वै.प्र.ख. (श.क.) | – – |
| बुध्यमानः (जीवात्मा) | अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि । | महा. 12.296.3, 6 | – – |
| बृहस्पतिः❀ | बृहद् ब्रह्म महच्चेति शब्दाः पर्याय-वाचका । एभिः समन्वितो राजन् गुणैर्विद्वान् बृहस्पतिः ।। | महा. 12.323.2 | 3 23 |
| बोधः | 1 बुद्ध्यां बोधः सुतः । | लि.पु.पू. 70.395 | |
| | 2 बोधं बुद्धिः । | मा.पु. 50.27 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 यस्माद् बुद्ध्या तु शेते ह तस्मा-बोधात्मकः स वै । | वा.पु.पू. 59.77 | – – |
| ब्रह्म/ब्रह्मा❀ | 1 यं बृहन्तं बृहत्युक्थे यमग्नौ च महाध्वरे । ये विप्रसंघा गायन्ति तस्मै वेदात्मने नमः । | महा. 12.47.26 | 3 24 |
| | 2 बृहत्त्वाद् बृंहणत्वाच्च तस्माद् ब्रह्मेतिसंज्ञितः । | हरि. 3.88.45½ | |
| | 3 बृहत्त्वाद् बृंहणत्वाच्च भावानां सकलाश्रयात् । यस्माद् धारयते भावान् ब्रह्म तेन निरुच्यते ।। | लि.पु. 70.16 | |
| | 4 बृहत्त्वाच्च स्मृतो ब्रह्मा । | लि.पु. 70.102; वा.पु.पू.4.40, 5.39; कू.पु.पू. 4.60 | |
| | 5 बृहत्त्वाद् बृंहणत्वाच्च भावानां सलिलाश्रयात् । यस्माद् बृंहयते भावान् ब्रह्मा तेन निरुच्यते ।। | वा.पु.पू. 4.29 | |
| | 6 बृहत्त्वाद् बृंहणाच्चैव तद्ब्रह्मेत्य-भिधीयते । | वा.पु.पू. 61.107 वि.पू. 3.3.22 | |
| | 7 शब्दब्रह्मागममयं परं ब्रह्म विवेक-जम् ।……… ………………— वेदादिविद्या ह्यपरमक्षरं ब्रह्म सत्परम् । तदेतद् भगवद्वाच्य-मुपचारेऽर्चनेऽन्यतः ।। | अ.पु. 379.8, 9 | |
| | 9 बृहदस्य शरीरं यदप्रमेयं प्रमाणतः। बृहद्विस्तीर्णमित्युक्तं ब्रह्मा तेन स उच्यते ।। | साम्ब.पु. 8.40 | |
| | 9 बृहत्वाद् बृंहणत्वाच्च ब्रह्मा ब्रह्म-विदांवर । | लि.पु.पू. 8.71 | |
| | 10 बृहकत्वाच्च जगतां ब्रह्मा सूर्यः प्रकीर्तितः । | लि.पु.पू. 1.1 | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| ब्रह्मचारी | अपेतव्रतधर्मा तु केवलं ब्रह्मणिस्थितः । ब्रह्मभूतश्चरंलोके ब्रह्मचारी भवत्ययम् । | महा. 14.26-16 | 4 | 9 |
| ब्रह्मदत्तः | तस्याः (सोमदायाः) प्रसन्नो ब्रह्मर्षिः (चूलीतपस्वी) ददौ पुत्रमनुत्तमम् । ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् । | वा. रा. बाल. 32.18 | – | – |
| ब्रह्मधना | इयं ब्रह्मधना नाम मम कन्या ह्यलोमिका । ब्रह्मसत्त्वधनाहारा इति खण्डोऽभ्यभाषत ॥ | वा.पु.उ. 8.118 | – | – |
| ब्रह्मर्षिः | 1 ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः । ब्रह्मण्यं तपसोऽग्रेण प्राप्तवानसि कौशिकः ॥ | वा.रा.बाल. 65.19½ | – | – |
| | 2 यस्माद्दषन्ति ब्रह्माणन्तेन ब्रह्मर्षयः स्मृताः । | वा.पु.पू. 61.81 | | |
| | 3 ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयो मताः । | वा.पु.पू. 61.87 | – | – |
| ब्रह्मवैवर्त | 1 विवृतं ब्रह्म कार्त्स्न्येन कृष्णेन यत्र शौनकः । ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविदः ॥ | ब्र. वै. 1.1.10 | | |
| | 2 विवर्तनात् ब्रह्मणस्तु ब्रह्मवैवर्तमुच्यते । | शि.पु. 5.44.132 | – | – |
| ब्रह्माणी | 1 आपाता ब्रह्मणः शक्तिः ब्रह्माणी साभिधीयते । | मा.पु. 8.14 | | |
| | 2 ब्रह्माणी ब्रह्मजननाद् ब्रह्माक्षरपरा मता । | दे.पु. 45.(श.क.) | – | – |
| ब्रह्माण्डं | ब्रह्माण्डचरितोक्तत्वाद् ब्रह्माण्डं परिकीर्तितम् । | शि.पु. 5.44.135 | – | – |
| ब्रह्मावर्त | ......——ब्रह्मावर्तमिति स्मृतम् । तत्र, सन्निहितो ब्रह्मा नित्यमेव युधिष्ठिर । | म.पु. 190.7, 8 | – | – |
| ब्राह्म (जगत्) | 1 ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतः । | महा. 12.181.10 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 यत्र वक्ता स्वयं तण्डे (मुने) ब्रह्मा साक्षात् चतुर्मुखः । तस्माद् ब्राह्मं समाख्यातं पुराणं प्रथमं मुने । | शि.पु.5.44.125 | |
| ब्राह्मणः❀ | 1 —····यद् ब्रह्म तद् ब्राह्मणः । | महा.12.329.5(3) | 7 12 |
| | 2 ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः । ये स्थिता ब्रह्मचर्येषु ब्राह्मणास्ते दिवि स्थिताः ।। | महा. 1.45.38 | |
| | 3 ब्रह्मचर्याद् ब्राह्मणस्य ब्राह्मणत्वं विधीयते । | हरि. 1.45.37 | |
| | 4 सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते । | वा.पु.पू.8.156 | |
| | 5 ब्राह्मणो ब्रह्मणोऽवनात् । | वा.पु.पू.59.116 | |
| | 6 कर्मणा ब्राह्मणो जातः करोति ब्रह्मभावनाम् । स्वधर्मनिरतः शुद्ध-स्तस्माद् ब्राह्मण उच्यते ।। | ब्र.वै.ग.ख.35.70 | |
| भक्तः | आशुभक्ता भवन्त्येव परमेश्वरसेवया । भज इत्येष धातुर्वै सेवायां परिकीर्तितः ।। | लि.पु.उ.9.19 | – – |
| भक्तिः | तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी । | लि.पु.उ.9.20 | – – |
| भगः | 1 सम्भर्त्तेति तथा भर्त्ता मकारोऽर्थद्वयान्वितः ।। नेता गमयिता स्रष्टा गकारोऽयं महामुने ।। | | |
| | 2 भग ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना । | अ.पु.379.10.11 | |
| | 3 सेव्यते यः सुरैः सर्वैः भाश्चैव भजते यतः । धातुभजेति सेवायां तेनाऽसौ भग उच्यते ।। | साम्ब.पु.8.37 | – – |
| भगवती | 1 समृद्धि-वृद्धि-सम्पत्ति यशसां वचनो भगः । तेन शक्तिर्भगवती भग-रूपाच्च सा सदा ।। | ब्र.वै.प्र.खं.2.11 | |
| | 2 सिद्धैश्वर्यादिकं सर्वं यस्या मस्ति युगे युगे । सिद्धादिके भगो ज्ञेयस्तेन सा भगवती स्मृता ।। | ब्र.वै.प्र.कृ.57.16 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 द्रष्टव्य—भ-ग—भग । व–वसन्ति तत्र भूतानि भूतान्याखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्यय: ।। | वि.पु.6.5.75 | – – |
| भगवान् | 1 वसन्ति विष्णौ भूतानि स च धातुस्त्रिधात्मक: । एवं हरौ हि भगवान् शब्दोऽन्यत्रापचारत: ।। उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ।। ज्ञान शक्ति: परैश्वर्यं वीर्यं तेजांस्यशेषत: । भगवच्छब्दवाच्यानि बिना हेयैर्गुणादिभि: :। | अ.पु,379.12–14 | |
| | 2 भगवान् सर्वविज्ञानात् । | कू.पु.पू.4.63.5.2 | |
| | 3 भगवान् भगवद् भावात् । | लि.पु.70.98 | |
| | 4 भगवान् भग सद्भावात् । | वा.पु.पू.5.34 | |
| | 5 भावानुरूपफलदो भगवानिति कीर्तित: । | लि.पु.पू.79.4 | |
| भद्राश्व: | तत्र (बरकेतु देशे) रुद्रकदम्बस्य तदा श्वेतहरो हरि: । प्राप्तवानमरश्रेष्ठ: — — — — यस्य नाम्ना समाख्यातो भद्राश्वो नाम नामत: ।। | वा.पु.पू.35.24,25 | – – |
| भया | स (हेति: राक्षस:) कालभगिनीं कन्यां भयां नाम भयावहाम् । | वा.रा.उत्तर 4,16 | – – |
| भरत:❀ (दौष्यन्ति:) | 1 भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि । तस्माद् भरत्वयं नाम्ना भरतो नाम ते सुत: ।। | महा.1.69.33 तु.1.90.29.33 हरि.1.32.12 | 6 14 |
| (अग्नि:) | 2 भरत्येष प्रजा: सर्वास्ततो भरत उच्यते । | महा. 3.211.1 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 माता भस्त्रा पितुः पुत्रो येन जातः स एव सः। भरस्व पुत्रं दुष्यन्त मामवंस्थाः शकुन्तलाम् ।। | वि.पु.4.19.12 भा.पु.9.20.21,म.पु.49.30 | |
| भरद्वाजः❀ | 1 भरे सुतान् भरे शिष्यान् भरे देवान् भरे द्विजान् । भरे भार्यां भरे द्वाजं भरद्वाजोऽस्मि शोभने ।। | महा.गी प्रे. अनु.93.88 महा.13.95.31 | 5 11 |
| | 2 मूढे भर द्वाजमिमं भर द्वाजं वृहस्पते । यातौ यदुक्त्का पितरौ भरद्वाजस्त-तस्त्वयम् ।। | वि.पु.4.19.18 भा.पु.9.20.38 | |
| | 3 भरस्व वाढमित्युक्तो भरद्वाज-स्ततोऽभवत् । | वा.पु.उ.37.146 | |
| | 4 गमिष्यामि गृहं स्वं वै भरस्वैनं वृहस्पते । एवमुक्त्का गता सा तु गतायां सोऽपि तं त्यजत् ।। | म.पु.49.26 | |
| भर्गः | तज् ज्योतिः परमं ब्रह्म भर्गस्तेजो यतः स्मृतम् । भा दीप्ताविति रूपं हि भ्रस्जः पाकेऽथ तत् स्मृतम् ।। ओषध्यादिकं पचति भ्राजृ दीप्तौ तथा भवेत् । भर्गः स्याद् भ्राजते इति वहुलं छन्द ईरितम् ।। | अ.पु.216.3.4 | – – |
| भर्ता❀ | 1 भार्याया भरणाद् भर्ता । | महा.ग.आदि सम्भव 104.30 | 7 13 |
| | 2 भर्ताऽसि भरणान्मम | महा.14.93.26 | |
| | 3 भरणाद्धि स्त्रियो भर्ता ——···। गुणस्यास्य निवृत्तौ तु न भर्ता । | महा.12.258.35 | |
| | 4 भरणादेव भर्ता । | ब्र.वै.प्र.ख.42.24 | |
| भवः | 1 भव एवं ततो यस्माद् भूतभव्यभ-वोद्भवः ।। | महा.ग.द्रोण 202.135 | 3 26 |
| | 2 भूतत्वाद्भव उच्यते । | वा.पु.पू.4.40 | |
| | 3 ध्यायतो ब्रह्मणो वक्त्रादुद्यत् समभवद्भवः । | वा.पु.पू.31.53 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 आभूतसंप्लवात्तस्माद्भवः संसार उच्यते । | वा.पु.उ.38.203 | |
| भविष्यं(पुराणं) | भविष्योक्तं भविष्यकम् । | शि.पु5.44.131 | |
| भव्यः (स्वः) | भव्येति व्याहृतं यस्माद् भव्यो लोकस्तदाभवत् । अनागते भव्य इति शब्द एष विभाव्यते । तस्माद् भव्यो ह्यसौ लोको नामतस्तु दिवं स्मृतम् ।। | वा.पु.उ.3.16 | |
| भस्म | भासतेत्येव यद् भस्म शुभं भावयते च यत् । भक्षणात् सर्वपापानां भस्मेति परिकीर्तितम् ।। | लि.पु.पू.34.5 | |
| भागवतं | भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते । तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम् ।। | शि.पु.5.44.129 | |
| भागीरथी | 1 इयं च दुहिता श्रेष्ठा तव (भगीरथस्य) गंगा भविष्यति । त्वत्कृतेन च नाम्ना····दिव्या भागीरथीति च ।। | 44.5 | – – |
| | 2 उपह्वरे निवसतो यस्याङ्के निषसाद ह । गङ्गा भागीरथी······· । | महा.12.29.61 | |
| | 3 भगीरथः योऽसौ गङ्गा स्वर्गादिहानीय भागीरथी संज्ञां चकार । | वि.पु.44.35 | |
| | 4 येन (भगीरथेन) भागीरथी गङ्गा तपः कृत्वाऽवतारिता । | कू.पु.पू.21.8 | |
| | 5 भगीरथस्तु गंगामानयामास कर्मभिः । तस्माद् भागीरथी गंगा कथ्यते वंशवित्तमैः ।। | वा.पु.उ.26.168 | |
| | 6 सः गंगा सरिच्छ्रेष्ठमावतारयत् प्रभुः । समुद्रमानयेच्चैनां दुहितृत्वेऽप्यकल्पयत् । तस्माद् भागीरथी गंगा कथ्यते वंशचिन्तकैः ।। | ब्र.पु.8.75 | |
| | 7 भगीरथेन सा नीता तेन भागीरथी स्मृता । | ब्र.वै.प्र.ख. 18.70 | |
| भानुः | 1 भानोस्तु भानवः पुत्राः । | अ पु.18.33 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 नुदिति प्रेरणे धातुर्भा दीप्तौ चैव कीर्तितः । नोदनात्कारणाद्भासा भानुरित्यभिधीयते ।। | साम्ब पु.8.20 | |
| भारतं | 1 शकुन्तलायां भरतो यस्य नाम्नास्य भारताः । | हरि. 1.32.10 | – – |
| | 2 तेने(भरतेन)दं भारतं कुलम् । अपरे ये च पूर्वे च भरता इति विश्रुताः ।। | महा. 1.69.49 | |
| | 3 उत्तरं यत्समुद्रस्य हिमद्रवक्षिणं च यत् । वर्षं तद् भारतं नाम— — भरणाच्च प्राणानां वै मनुर्भरत उच्यते । निरुक्तवचनाच्चैव वर्षं तद् भारतं स्मृतम् ।। | वि.पु.2.3.1 अ.पु.11.8.1 वा.पु.पू.45.75.76 | |
| | 4 भरणात्प्रजनाच्चैव मनुर्भरत उच्यते । निरुक्तवचनैश्चैव वर्षं तद् भारतं स्मृतम् ।। | म.पु.114.5 | |
| | 5 नाभेः पुत्रस्तु ऋषभाद्भरतो चाभवत्ततः । (नाभेः पुत्रश्च ऋषभः ऋषभाद्भरतोऽभवत्) तस्य नाम्ना त्विदं वर्षं भारतं चेति कीर्त्यते ।। | नरसिंह पु.30 स्कन्द-कुमारिका 37.57 | |
| | 6 हिमाह्वं (हिमाब्दं) दक्षिणं वर्षं भरताय ददौ पिता । तस्माच्च भारतं वर्षं तस्य नाम्ना महात्मनः ।। | मा.पु.50.41 | |
| | 7 भरताद् भारतं वर्षम् । | अ.पु.107.12 | |
| | 8 हिमाद्रे र्दक्षिणं वर्षं भरताय न्यवेदयत् । तस्मात्तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ।। | लि.पु.पू.47.24 | |
| | 9 येषां (ऋषभस्य शतपुत्राणां) खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति ।। भा.पु.5.4.9 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 10 आसीत् पुरा मुनिश्रेष्ठो भरतो नाम भूपतिः। आर्षभो यस्य नामेदं भारतं खण्डमुच्यते ।। | वा.पु.48.5 | |
| | 11 तत्रापि भरते ज्येष्ठे खण्डेऽस्मिन् स्पृहणीयके। तन्नाम्ना चैव विख्यातं खण्डं च भारतं तदा ।। | शि.पु.52 | |
| | 12 शकुन्तलायां भरतो यस्य नाम्ना तु भारतम् । | वा.पु.3.37.130 | |
| भारती | 1 वर्षं यद् भारतं नाम यत्रेयं भारती प्रजा ।। | वा.पु.पू.45.76 | |
| | 2 वर्षं तद् भारतं नाम भारती यत्र सन्तति :। | वि पु.2.3.9 | – – |
| (वृत्तिः) | 3 भरतेन प्रणीतत्वाद् भारतीरीति-रुच्यते । | अ.पु.349.6 | |
| भार्या❀ | 1 भर्तव्या (रक्षणीया च पत्नी हि) पतिना सदा । | महा. 3.67.13 | 7 14 |
| | 2 भर्तव्यत्वेन भार्या च । | महा. 12.258.49 | |
| भावः | भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति भावनासम्भवः यस्मात् प्रजा-सम्भवनादुत्पन्नस्तु त्वयम्भुवा । | अ.पु.339.12 | – – |
| (काव्यं) | तस्मात् प्रजासम्भवनाद्भावनासम्भवः स्मृतः । | वा.पु.521.55 | – – |
| भाव्यलोकः (स्वः) | स्वारत्युक्तं तृतीयोऽन्यो भाव्यो लोक-स्तदाऽभवत् । भाव्य इत्येष धातुर्वै भाव्ये काले विभाव्यते ।। | वा.पु.उ.3.17 | |
| भासः (पक्षी) | भासी भासान् व्यजायत । | वारा.अरण्य 14.19 | – – |
| भास्करः | 1 क्ष्मायां सृष्टिं विसृजतेऽभासयत्तेन भास्करः । | लि.पु.पू.54.33 | |
| | 2 भास्वतस्तु करा ह्यस्य भासोऽप्यर्थं करोति च । भासृ दीप्तौ स्मृतो धातुर्भास्करस्तेन स स्मृतः ।। | साम्ब.पु.8.22 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| भीमः | 1 एतस्य कार्याणि अतिमानुषाणि भीमेति शब्दोऽस्य गतः पृथिव्याम् । | महा. 3.254.10 | – – |
| | 2 वायुवेगपराक्रमः । | महा.3.13.81 | |
| भीमव्यूहः | भीमव्यूहः समाख्यातो भीमाया व्यूह उच्यते । | लि.पु.उ. 27.182 | – – |
| भीमा | पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥ तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः । भीमा देवीति विख्यातं तन्मे नाम भविष्यति ॥ | मा.पु. 91.48, 49 | – – |
| भीष्मः | 1 ततोऽन्तरिक्षे····देवाः···भीष्मोऽयमिति चाब्रुवन् । | महा. 1.94.90 | – – |
| | 2 तस्य सुदुष्करं कर्म प्रशशंसुर्नराधिपाः । ·········भीष्मोऽयमिति चाब्रुवन् । | महा. 1.94.93 | |
| भीष्मसूः | भीष्मः स्वयं वसुर्जातः तस्यांशात्तेन भीष्मसूः । | ब्र.वै.प्र.ख. 34.22 | – – |
| भुवः | भूतेऽस्मिन् भवदित्युक्तं द्वितीयं ब्रह्मणा पुनः । भवत्युत्पद्यमानेन कालशब्दोऽयमुच्यते । भवनात्तु भुवर्लोको निरुक्तज्ञैर्निरुच्यते । अन्तरिक्षं भुवस्तस्माद् भुवर्लोको ऽयमुच्यते ॥ | वा.पु.उ. 3.14 | – – |
| भूः | 1 भूरिति व्याहृतं पूर्वं भूर्लोकोऽयमभूत्तदा । भू सत्तायां स्मृतो धातुस्तथासौ लोकदर्शनः ॥ भूतत्त्वाद्दर्शनत्वाच्च भूर्लोकोऽयमभूत्तदा । अतोऽयं प्रथमो लोको भूतत्वाद् भूः द्विजैः स्मृतः ॥ | वा.पु.उ. 3.12 | |
| | 2 भूरिति व्याहृतं पूर्वं भूर्लोकश्च ततो ऽभवत् । | वा.पु.उ. 39.18 | |
| भूतः | 1 भूतत्वादभूत उच्यते । | लि.पु.70.102; वा.पु.पू.5.39 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 भूतत्वात्ते स्मृता भूताः । | लि.पु.70.233; वा.पु.पू.9.35 | — — |
| भूतयज्ञः | 1 देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् । भूतयज्ञः स विज्ञेयो भूतिदः सर्वदेहिनाम् ।। | कू.पु.उ. 18.105 | |
| | 2 सर्वेषामेव भूतानां बलिदानं विधानतः । भूतयज्ञ इति प्रोक्तो भूतिदः सर्वदेहिनाम् ।। | लि.पु.पू. 26 17 | — — |
| भूतवनं | तत्र भूतवनं नाम नानाभूतगणालयम् । | लि.पु.पू 51.7 | |
| भूतावासः (विष्णुः) | वसन्ति त्वयि भूतानि भूतावासस्ततो हरे: । | हरि.3.88.53 | – – |
| भूमिः | प्रथमं यत्र सर्वेषां भूमिस्तेन प्रकीर्तिता । | ब्र.वै.प्र.ख.9.28 | |
| भृगुः❀ | 1 भृगित्येव भृगुः पूर्वम् । | महा.गी.प्रे.अनु. 85.105 | 5 12 |
| | 2 सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद् भृगुः स्मृतः । | महा.गी.प्रे.अनु. 85.105 | |
| | 3 हुते चाग्नौ सकृच्छुक्रे ज्वालायाः निःसृतः कविः । हिरण्यगर्भस्तं दृष्ट्वा ज्वालां भित्त्वा विनिःसृतम् । भृगुस्त्वमिति होवाच यस्मात्तस्मात् स वै भृगुः।। | वा.पु.उ. 4.37, | |
| | 4 अतितेजस्विनि भृगुर्वर्तते नाम्नि शौनकः । जातः सद्योऽतितेजस्वी भृगुस्तेन प्रकीर्तितः ।। | ब्र.वै.ब्र.ख. 22.9 | – – |
| भैमः | भीमो नाम महानभूत् । येन भैमाः""। | हरि.2.38.38 | – – |
| भौत्यः (मनुः) | 1 भूत्यां चोत्पादितो देव्या भौत्यो नाम रुचेः सुतः । | हरि.1.7.45 | – – |
| | 2 भौत्यो नाम मनुस्तस्य पुत्रो भूतेरजायत । | मा.पु.100.27 | |
| | 3 मुनिर्भूति--सुतस्तद्वद् भौत्यो नाम भविष्यति । | म.पु.9 35 | |
| | 4 भूत्यामुत्पादितो यस्तु भौत्यो नामाभवत्सुतः । | वा.पु.उ. 38.55 | |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| भौम: | भौमोऽयं नरको नाम प्राग्ज्योतिषेश्वर: । — — — — — — — यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वत्स्पर्शसम्भव: पुत्रस्तदायं मय्यजायत ।। | वि.पु. 5.29.8,23 | — | — |
| भ्रामरी | यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति । तदाऽहं भ्रामरं रूपं कृत्वा संख्येयषट् पदम् । त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् । भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वत: ।। | मा.पु.91.50 | — | — |
| मङ्गलचण्डी | प्रकृतेर्मुखसम्भूता सर्वमङ्गलदा सदा । सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी ।। | ब्र.वै.प्र.ख.1.88 | — | — |
| मति: | 1 मनुते मन्यते यस्मान्मतिर्मतिमतां वरां:। | लि.पु.पू.8.74 | | |
| | 2 बिभर्ति मानं मनुते विभागं मन्यतेऽपि च । पुरुषो भोगसम्बन्धात्तेन चासौ मति: स्मृत: ।। | लि.पु 70.15, वा.पु.4.28 | | |
| | 3 भगवान् मतिरुच्यते । | वा.पु.पू.59.77 | — | — |
| मत्स्य: | मत्स्यो नाम राजासीद् धार्मिक:···। | महा.1.57.51 | — | — |
| मत्स्यगन्धा | सा तु सत्यवती ···मत्स्यघात्यभिसंश्रयात् । आसीन्मत्स्यसगन्धैव ··· | महा. 1.57.55 | — | — |
| मथुरा❀ (मधुरा) | 1 मथुरा नाम सा पुरी । शत्रुघ्नेन पुरा सृष्टा हत्वा तं (मधुं) दानवं रणे ।। | हरि.1.54.56 | 8 | 6 |
| | 2 शत्रुघ्नश्च मधो: पुत्रं लवणं नाम राक्षसम् । हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ।। | भा.पु. 9.11.14 | | |
| | 3 माधवं लवणं हत्वा गत्वा मधुवनञ्च तत् । शत्रुघ्नेन पुरी तस्य मथुरा सन्निवेशिता ।। | वा.पु.उ. 26.185 | | |
| | 4 शत्रुघ्नेनाप्यमितबलपराक्रमो मधुपुत्रो लवणो नाम राक्षसो निहतो मथुरा च निवेशिता । | वि.पु. 4.4.101 | | |
| मधु:❀ | 1 ब्रह्मा पर्यमृशच्छतै: । एकं मृदुतरं मेने····मृदुस्त्वयं मधुर्नाम ··। | महा. 1.52.24-25 | 4 | 15 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| (वृष्णिवंश:) | 2 मधुसंज्ञाहेतुश्च मधुरभवत् । | वि.पु.4.11.29 | |
| मधुनिषूदन: | मधुरिन्द्रियनामेति ततो मधुनिषूदनः । | महा.3.88.46 | – – |
| मधुमती | मधोर्दैत्यस्य वै सुता । देवी मधुमती नाम········। | महा.2.37.13 | – – |
| मधुरा(मथुरा) | 1 इयं मधुपुरी रम्या मधुरा······—। | वा.रा.उत्तर70.5 | – – |
| | 2 हत्वा च लवणं रक्षो मधुपुत्रं महाबलम् । शत्रुघ्नो मधुरां नाम पुरीं यत्र चकार वै ॥ | वि.पु. 1.12.4 | – – |
| मधुवनं | 1 मधुर्नाम महानासीद् दानवः— — — घोरं मधुवनं नाम ·· —। | हरि.1.54.23 | – – |
| | 2 आख्यानमात्रम् । | वा.रा.सु. 61.11.12 | – – |
| | 3 पुनश्च मधुसंज्ञेन दैत्येनाधिष्ठितं यतः । ततो मधुवनं नाम्ना ख्यातमत्र महीतले । | वि.पु. 1.12.3 | |
| मधुसूदन: | 1 मधुहा मधुसूदनः । | महा.5.68.4 | – – |
| | 2 तस्य तात वधादेव— — — मधुसूदनमित्याहुः । | महा.6.63.13 तु.-12.200.16 | |
| | 3 सूदनं मधुदैत्यस्य यस्मात् स मधुसूदनः । इति सन्तो वदन्तीशं वेदे भिन्नार्थमीत्सितम् । मधु क्लीबं च माध्वीके कृतकर्मशुभाशुभैः । भक्तानां कर्मणां चैव सूदनं मधुसूदनः । परिणाममशुभं कर्म भ्रान्तानां मधुरं मधु । करोति सूदनं यो हि स एव मधुसूदनः ॥ | ब्र.वै.कृ.ख. 111.28-31 | — — |
| मध्यदेश: | हिमवद्विन्ध्ययोर्मध्यं — — ·······मध्यदेशः प्रकीर्तितः । | महा.आश्व.अपे. 1.4.2504.5 | – – |
| मध्यमेश्वर: | क्षेत्रमध्ये च यत्राहं स्वयं भूत्वाऽग्रमास्थितः । मध्यमेश्वरमित्येवं ख्यातः सर्वसुरासुरैः ॥ | लि.पु.पू. 92.91 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| मन: | 1 मनुते सर्वभूतानां यस्माच्चेष्टा फलं ततः। सौक्ष्म्यात्तेन विभक्तं तु येन मन उच्यते ।। | लि.पु.70.13 | |
| | 2 मनस्तु मनुते यतः। | लि.पु.पू.8.71 | |
| | 3 मनुते सर्वभूतानां यस्माच्चेष्टा फलं ततः। सौक्ष्म्यात्तेन विवृद्धानां तेन तन्मन उच्यते ।। | वा.पु.पू. 4.26 | — — |
| मनसा | कन्या सा च भगवती कश्यपस्य च मानसी । तेनेयं मनसा देवी मनसा या च दीव्यति । मनसा ध्यायते या सा परमात्मानमीश्वरम् । तेन सा मनसा देवी योगेन तेन दीव्यति ।। | ब्र.वै.प्र.ख. 45.2-3 | |
| मनु: | मननान्माननाच्चैव तस्मात्ते मनवः स्मृताः। | वा.पु.उ.38.53 | — — |
| मनुष्य:❀ | मनुर्मनुष्यानजनयत्`—`·······। | वा.रा.अरण्य 14.29 | 7 15 |
| मन्त्र: | मन्त्रो मन्त्रयतेर्धातोः। | वा.पु.पू.59.116 | – – |
| मन्दर: | 1 मन्दा इति ह्यपां नाम मन्दरो दारपादणाम् । | वा.पु.पू. 49.50 | |
| | 2 मन्दरः सैव विज्ञेयः सर्वधातुमयः शुभः। मन्द इत्येष यो धातुरपामर्थे प्रकाशकः। अपां विदारणाच्चैव मन्दरःस निगद्यते ।। | म.पु. 121.61 | -- – |
| मन्दार: | मन्दारपुष्पैर्यद्युक्तो मन्दारस्तेन कथ्यते । | हरि.2.57.70 | – – |
| मन्मथ: | 1 मनो मथ्नाति सर्वेषां पञ्च बाणेन कामिनाम् । तन्नाम मन्मथस्तेन प्रवदन्ति मनीषिणः ।। | ब्र. वै. ब्र. ख. 4.7 | |
| | 2 यस्मात्प्रमथ्य चेतस्त्वं जातोऽस्माकं तथा विधेः। तस्मान्मन्मथनाम्ना त्वं लोको गेयो भविष्यसि ।। | कालिका पु. | |
| मन्मथव्यूह: | मन्मथः कथितो व्यूहो मन्मथायाः शृणुष्व मे । | लि.पु.उ. 27.175 | – – |
| मरीचि: | 1 मरीचिभ्यो मरीचिस्तु·····—। | महा.गी.प्रे.अनु. 85.107 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 मरीचिः प्रथमस्तेषां मरीचिभ्यः समुत्थितः । | वा.पु.उ. 4.44 | |
| | 3 तेजो भेदः मरीचिश्च वेदेषु वर्तते-स्फुटम् । जातः सद्योऽतितेजस्वी मरीचिस्तेन कीर्तितः ।। | ब्र.वै.-ब्र.ख. 22.6 | — — |
| मरुत्❀ | 1 मा रोदीरिति तं शक्रः पुनः पुनरथाब्रवीत् । मरुतो नाम देवास्ते···· —— यथैवोक्तं मघवता तथैव मरुतोऽभवत् । | हरि. 1.3.135½ | 8 25 |
| | 2 यदुक्तं वै भगवता (मा रोदीः) तेनैव मरुतोऽभवत् । | वि.पु. 1.21.41 | |
| | 3 इन्द्रो निवारयामास मा रोदिष्ट पुनः पुनः । | म.पु. 7.58 | |
| | 4 यस्मान्मा रुदतेत्युक्त्वा रुदन्तो गर्भसंस्थिताः । मरुतो नाम ते नाम्ना भवन्तु मखभागिनः ।। | म.पु. 7.62 | |
| | 5 चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् । रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ।। | भा.पु. 6.18.62 | |
| मरुत्वान् | मरुत्वत्या मरुत्वन्तः । | अ.पु.18.32; कु.पु.पू.16.8 | — — |
| मलदः (देशः) | इह भूम्यां मलं दत्वा कारूषमेव च । | वा रा.बाल.24.20 | – – |
| महर्षिः | 1 महर्षिशब्दं लभतां···· — तपसोग्रेण तोषितः । | तत्रैव 63.18 | – – |
| | 2 गत्यर्थादृषतेर्धातोः नामनिष्पत्तिरुच्यते । यस्मादृषति सत्त्वेन महत्तस्मान्महर्षयः ।। | ब्रह्माण्ड1.6.71 | |
| | 3 गत्यर्थाद् ऋषयो धातोर्नामनिर्वृत्तिरादितः । तस्मादृषिपरत्वेन महांस्तस्मान्महर्षयः ।। | वा.पु.पू. 8.68 | |
| | 4 सेश्वराः स्वयमुद्भूता ब्रह्मणो मानसाः सुताः । निवर्तमानैस्तैर्बुद्ध्या महान् परिगतः परः । यस्मादृषिपरत्वेन सह तस्मान्महर्षयः ।। | म पु. 145.84-85 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 यस्माद्दधन्ति ये धीरा महान्तं सर्वतो गणैः । तस्मान्महर्षयः प्रोक्ता बुधैः परमदर्शिनः ।। | वा.पु.पू. 59.82 | |
| महादेवः | 1 प्रथमो ह्येष देवानां - — —। | महा.7.173.81 | – – |
| | 2 यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः । | महा. 7.173.91 | |
| | 3 स तु देवो बलेनासीत्सर्वेभ्यो बलवत्तरः। महादेव इति ख्यातः । | महा.8.24.63 | |
| | 4 मेने (मङ्कलकः मुनिः) देवं महादेवं···· नान्यं देवादहं मन्ये । | महा. 9.37.42 | |
| | 5 रुद्रात्परतरं महत् । | पा.टि. | |
| | 6 देवानां सुमहान् यच्च यच्चास्य विषयो महान् । यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः । | महा.गी.प्रे.अनु. 161.8 | – – |
| | 7 देवेषु च महान्देवो महादेवस्ततः स्मृतः । | लि.पु.70.101; वा.पु. 5.38 | |
| | 8 सर्वान् देवान् ऋषींश्चैव समेतानसुरैः सह । अत्येति तेजसा देवो महादेवस्ततः स्मृतः ।। | वा.पु.पू. 10.61 | |
| | 9 देवेषु च महादेवः महादेव इति स्मृतः । | कू.पु.पू.4.60 | |
| | 10 पूज्यन्ते च सुरैः सर्वैर्महांश्चैव प्रमाणतः । धातुर्मह तु पूजायां महादेवस्ततः स्मृतः ।। | साम्ब.पु. 8.41 | |
| | 11 तस्मान्महीयते देवे स्वधर्मञ्च ज्ञानसंज्ञिते । आत्मयोगात् परे तत्त्वे महादेवस्ततः स्मृतः ।। | स्कन्द पु. स्वर्ग 60.36 | — — |
| | 12 ब्रह्मादीनां सुराणां च मुनीनां वेदवादिनाम् । महती पूजिता विश्वे मूलप्रकृतिरीश्वरी ।। तस्या देवः पूजितश्च महादेवः स च स्मृतः ।। | ब्र.वै.ब्र.ख.56.68 | |
| महान् | 1 तत्त्वानामग्रजो यस्मात् महांश्च परिणामतः । विशेषेभ्यो गुणेभ्योऽपि महानिति ततः स्मृतः ।। | लि. पु. 70.14 | |
| | 2 तत्त्वानामग्रजो यस्मात् महांश्च परिणामतः । शेषेभ्योऽपि गुणेभ्योऽस्मै महानिति ततः स्मृतः ।। | वा. पु. 4.27 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 सविकारात् प्रधानात्तु महत्तत्त्वं प्रजापते । महानिति यतः ख्यातिर्लोकानां जायते सदा ।। | म. पु. 3.17 | |
| | 4 महान् व्याप्य स्थिता सर्वं महा वा प्रकृतिर्मता । | देवीपुराण 45. | — — |
| महाबाहुः (कृष्णः) | बाहुभ्यां रोदसी बिभ्रन् महाबाहुरिति स्मृतः । | महा. 5.68.9 | — — |
| महाभारतं❀ | 1 महत्त्वाद् भारवत्वाच्च महाभारतमुच्यते । | महा.1.1.209; चि. 274 | 6 5 |
| | 2 तन् (पापं) महाभारतमाख्यानं श्रुत्वैव प्रविलीयते । भरतानां महज्जन्म महाभारतमुच्यते । | महा.1.56.31 तु.-महा.18.5. पा.टि.गी.प्रे. स्वर्ग 5.45 | |
| | 3 भाति सर्वेषु वेदेषु रतिः सर्वेषु जन्तुषु । तरणं सर्वपापानां ततो भारतमुच्यते ।। | भारत सावित्री 62 | |
| महामती (अमावास्या) | महामखेष्वाङ्गिरसी-दीप्तिमत्सु महामती । महामतीति विख्याता..........। | महा. 3.208.7 | — — |
| महालयः | इदमन्यत्परं स्थानं गुह्याद् गुह्यतरं महत् । महादेवस्य देवस्य महालय इति श्रुतम् ।। | कू.पु.उ.37.1 | — — |
| महावीतं | 1 महावीतं स्मृतं वर्षं तस्य नाम्ना महात्मनः । | लि.पु.पू. 46.23 | |
| | 2 महावीतं स्मृतं वर्षं तस्मात्तु महात्मनः । | कू.पु.पू.40.15 | — — |
| महाव्याहृतिः | मया च व्याहृता यस्मात्त्वञ्चैव समुपस्थिता । महाव्याहृतिरित्येव नाम ते विचरिष्यति ।। | वा.पु.पू. 25.48 | — — |
| महासेनः | सेनापत्यं लब्धवान् देवतानां महासेनो यत्र दैत्यान्तकर्ता । | महा. 9.42.11 | — — |
| मही | महितत्वात् महीशब्दो ह्यस्मिन् वर्षे निपात्यते । | वा.पु.पू. 50.61 | — — |
| महेश्वरः | 1 महयन्ति च लोकांश्च महेश्वर इति स्मृतः । | महा. 7.173.83 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 ईश्वरत्वान्महत्त्वाच्च महेश्वरः । | महा.गी.प्रे.अनु. 161.6 | |
| | 3 महेश्वरश्च लोकानां महतामीश्वरश्च सः । | तत्रैव 161.28 | |
| | 4 सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः । | कू.पु.पू.5.23 | |
| | 5 विश्वस्थानाञ्च सर्वेषां महतामीश्वरः स्वयम् । महेश्वरं च तेनेमं प्रवदन्ति मनीषिणः ।। | ब्र.वै.-प्र.ख. 56.69 | – – |
| मांस | मां स भक्षयते यस्माद् भक्षयिष्ये तमप्यहम् । एतन्मांसस्य मांसत्वम्...। | महा.गी.प्रे.अनु. 116.25 | – – |
| मातंगः | 1 मातंगास्तु मातंगजाः । | वा.रा.अरण्य 14.25 | – – |
| | 2 मतङ्गादिति मातङ्गः । | वा.पु.उ.8.228 | – – |
| मात्स्यं | मात्स्यं मत्स्यस्य कथितम् । | शि.पु.5.44.134 | – – |
| माधवः❀ | 1 मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् । सर्वतत्त्वलयत्वाच्च.......। | महा. 5.68.4 | 3 28 |
| | 2 मधोस्तु माधवाः स्मृताः । | हरि.1.33.55; लि.पु.पू.68.15 | |
| | 3 मा विद्या च हरे प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीं ति शब्दितः । | तत्रैव 3.88.49 | |
| | 4 मा च ब्रह्मस्वरूपा या मूलप्रकृतिरीश्वरी । नारायणीति विख्याता विष्णुमाया सनातनी ।। महालक्ष्मीस्वरूपा च वेदमाता सरस्वती । राधा वसुन्धरा गङ्गा तासां स्वामी च माधवः ।। | ब्र.वै.-कृ.ख. 111.46-47 | — — |
| मानवः | रजःप्रियांस्ततः सोऽथ मानसानसृजत् सुतान् । मनस्विनस्ततस्तस्य मानवा जज्ञिरे सुताः ।। | लि पु.पू. 70.213 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| मानसाः | 1 रजःप्रायांस्ततः सोऽथ मानसानसृजत् सुतान् । मनसस्तु ततः तस्य मानवाः (सा) जज्ञिरे सुताः ।। | वा.पु.पू.9.16 | |
| | 2 अथ सृष्टास्तदा तस्य मनसा तेन मानसाः । | लि.पु.पू.41.6 | |
| मानसः (व्याधिः) | 3 मानसी जायते व्याधिर्मनस्येवेति निश्चयः । | महा. 14.12.2 | |
| मानसं (सरः) | 4 मनसा निर्मितं सरः । ब्रह्मणा—.... तेनेदं मानसं सरः । | वा.रा.बाल. 24.8 | – – |
| मान्धाता | 1 मामेव धास्यतीत्येवमिन्द्रोऽथाभ्यपद्यत । मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ।। | महा 12.29.77 | – – |
| | 2 मां धास्यतीति कारुण्यादिन्द्रो ह्यन्वकम्पयत् । तस्मात्तु मान्धातेत्येवं नाम तस्याद्भुतं कृतम् । | महा.ग.द्रोण. 62.6½ | – – |
| | 3 जातो नामैष कं धास्यतीति ते मुनयः प्रोचुः । अथागत्य देवराजोऽब्रवीत् मामयं धास्यतीति । ततो मान्धातृनामा सोऽभवत् ।। | वि. पु. 4.2.59-61 | |
| | 4 कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् । मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ।। | भा.पु. 9.6.31 | |
| | 5 कं धास्यति कुमारोऽयं मन्त्रिणश्चुक्रुशुर्भृशम् । तदेन्द्रो देशिनीं प्रादान्मान्धातेत्यवदद्वचः ।। | दे.भा 7.9 63 | |
| माया | राज्यश्रीवचनो माश्च याश्च प्रापणवाचकः । तं प्रापयति या नित्यं सा माया परिकीर्तिता ।। माश्च मोहा (क्षा) र्थवचनो याश्च प्रापणवाचकः । तं प्रापयति या नित्यं सा माया परिकीर्तिता ।। | ब्र.वै.कृ.ख. 27.27-28 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| मारीचः | ·····""'मरीचिस्तु मारीचः कश्यपः । | महा.गी.प्रे.अनु. 85.107 | – – |
| मारुतः❀ | 1 मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत । विभेद·······रुदन्तमपि···· वासवः । | वा.रा.बाल. 46.20. | 8 25 |
| | 2 मारुता इति विख्याता····ममात्मजाः । | वा.रा.बाल.47.4 | |
| | 3 त्वत्कृतेनैव नाम्ना च मारुता इति···। | वा.रा.बाल.47.7 | |
| मारुतिः | जवेन महता युक्तो मारुतिर्मारुतो यथा । | वा.रा.युद्ध.74.55 | -- -- |
| मार्कण्डेयः | 1 मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरांस्ततः । | अ.पु.20.10 | -- -- |
| (मार्कण्डेय-पुराणं) | 2 यत्र वक्ताऽभवत्तण्डे मार्कण्डेयो महामुनिः । मार्कण्डेयपुराणं हि तदाख्यातञ्च सप्तकम् ॥ | शि.पु. 5.44.130 | -- -- |
| मार्गी (मूर्च्छना) | मृगैः सह सञ्चरते सिद्धानां मार्गदर्शने । यस्मात्तस्मात्स्मृता मार्गी मृगेन्द्रोऽस्याश्च देवता ॥ | वा.पु.उ. 24.54 | -- -- |
| मार्तण्डः❀ | 1 न खल्वयं मृतोऽण्डस्थ इति स्नेहादभाषत । अज्ञानात् कश्यपस्तस्मान् मार्तण्ड इति चोच्यते ॥ | हरि.1.9.5 | 8 26 |
| | 2 विवस्वतः द्वितीये जन्मन्यण्डसंज्ञितस्याण्डं मारितमदित्याः । स मार्तण्डो विवस्वानभवत् । | महा. 12.329.44,5.6 | – – |
| | 3 यन्मार्त्तण्डो भवेत्युक्तः पित्राण्डे वै द्विधा कृते । तस्माद्विवस्वान् मार्तण्डः पुराणज्ञैर्विभाष्यते ॥ | वा.पु.उ. 22.29 | |
| | 4 न खल्वयं मृतो ह्यण्डे इति स्नेहात्तमब्रवीत् । अज्ञातः कश्यपः स्नेहान्मार्तण्ड इति चोच्यते ।। | वा.पु.उ. 22.35 | |
| | 5 मृतेऽण्डे जायते यस्मान्मार्तण्डस्तेन संस्मृतः । तत्तेजसश्च तत्रैव मार्तण्डः समजायत ॥ | म. पु. 2.36 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 6 अण्डे द्विधा कृते ह्यार्त्तं दृष्ट्वा स्नेहात् पिताऽब्रवीत् । आर्त्तो मा भव देवेश मार्त्तण्डस्तेन स स्मृतः ॥ | साम्ब. पु. 8.26 | |
| | 7 मृतेऽण्ड एष एतस्मिन् यदभूत्ततो मार्तण्डे इति व्यपदेशः । | भा.पु.5.20.44 | |
| | 8 मारितं ते यतः प्रोक्तमेतदण्डं त्वया मुने । तस्मान्मुने सुतस्तेऽयं मार्तण्डाख्यो भविष्यति ॥ | मा.पु.105.19 ब्र.पु.32.40 | |
| | 9 अनिष्पन्नेषु गात्रेषु पुत्रं दृष्ट्वा पिताऽब्रवीत् । आर्त्तस्त्वं भव माण्डेति मार्त्तण्डस्तेन स स्मृतः ॥ | मा.पु.77.1 | — — |
| मार्तिकवरः | महाभोजस्त्वतिधर्मात्मा तस्यान्वये भोजा मृत्तिकावरपुरनिवासिनो मार्तिकवरा बभूवुः । | वि.पु.4.13.7 | — — |
| मालवः | मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः । | महा. 3.28.58 | — — |
| मालवी | तत्रैव मालवो नाम वैश्यो विष्णुपरायणः । .... —— —— .... .... ... .... ....—— —— मालवी नाम भार्या च तस्य नित्यं पतिव्रता ॥ | लि.पु.पू. 1.19 | — — |
| मालोपमा | धर्माः प्रत्युपमानञ्चेदन्ये मालोपमैव सा । | अ.पु.344.15 | — — |
| माहिषिकः | महिषीत्युच्यते नारी या च स्याद् व्यभिचारिणी । तां दुष्टां कामयति यः स वै माहिषिकः स्मृतः ॥ | स्क.पु. काशीखण्ड 40.92 | — — |
| माहिष्मती | 1 महिष्मान्नाम पार्थिवः । माहिष्मती नाम पुरी येन राजा निवेशिता । | हरि. 133.5 | |
| | 2 महाश्मसंघातवती····माहिष्मती नाम पुरी प्रकाशमुपयास्यति । | तत्रैव 2.38.19 | — — |
| मित्रं ※ | 1 मित्रं मिदेर्नन्दतेः प्रीयतेर्वा संत्रायते मानदः मोदतेर्वा । (पाठभेदः) ······ मिन्देः········मिनुतेर्मोदतेर्वा । | महा. 8.29.23 महा.ग.कर्ण 42.31 | 6 16 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 स्नेहेन सर्वभूतानि यस्मात्त्रायति भास्करः । ञिमिदा स्नेहने धातुस्तस्मान्मित्रः स उच्यते ।। | साम्ब. पु. 8.29 | |
| मिथिः | 1 अरण्यां मथ्यमानायां प्रादुर्भूता महातपाः । मथनान्मिथिरित्याहुः । | वा.रा. उत्तर 57.19 | |
| | 2 मथनान्मिथिरिति । | वि.पु.4.5.23 | |
| | 3 अरण्यां मथ्यमानायां प्रादुर्भूतो महायशाः । नाम्ना मिथिरिति ख्यातः —। | वा.पु.उ.28.5 | — — |
| मिथिला | मिथिर्नाम महावीर्यो येनासौ मिथिलाऽभवत् । | वा.पु.उ.28.6 | — — |
| मुकुन्दः | मुकुमध्ययमानो निर्वाणं मोक्षवाचकम् । तद्ददाति च यो देवो मुकुन्दस्तेन कीर्तितः ।। मुकुं भक्तिरसप्रेम वचनं वेदसम्मितम् । यस्तं ददाति भक्तेभ्यो मुकुन्दस्तेन कीर्तितः।। | ब्र.वै.कृ.ख. 111.27-28 | — — |
| मुखं | यत्र बीजसमुत्पत्तिनानार्थरससम्भवा । काव्ये शरीरानुगतं तन्मुखं परिकीर्तितम् ।। | अ.पु 338.23 | — — |
| मुख्यसर्गः | बहिरन्तश्चाप्रकाशस्तब्धो निःसङ्ग एव च । मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः ।। | कू.पु.पू. 7.4 | — — |
| मुंजकेशः | ततः स्वतेजसाविष्टाः केशा नारायणस्य ह । बभुवुर्मुंजवर्णास्तु ततोऽहं मुंजकेशवान् ।। | महा. 12.330.45 | — — |
| मुंजपृष्ठः | यत्र मुंजवटे रामो जटाहरणमादिशत् ........— मुंजपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ।। | महा. 12.122.4 | |
| मुनिः (विष्णुः) | 1 मननान्मुनिरेवासि । | हरि.3.88.52 | — — |
| | 2 यदैवमध्यात्मरतः कालेन बहुजन्मना । सर्वत्र जातवैराग्य आ ब्रह्मभुवनान्मुनिः ।। | भा. पु. 3 27 27 | |
| | 3 अन्तर्बहिश्च मननात्कुरुते कर्मनित्यशः। मौनी शश्वद् वदेत्काले यो वै स मुनिरुच्यते ।। | ब्र.वै.ग.ख.35 71 | |
| मुरारिः | 1 एतेन मुरुमाक्रम्य ........। | हरि.2.101.67 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 ततो मुरस्समुत्तस्थौ तं जघान च केशवः । | वि.पु.5.29.17 | |
| | 3 हरिश्च चक्रं मृदुलाघवेन मुमोच तत्तस्य (मुरस्य) शिरश्च शत्रोः (तद्धृत्कमलं च शत्रोः)। (अ) इतः प्रसिद्धं समुपाजगाम मुरारिरित्येव हरिर्महात्मा (विभुर्नृसिंहः) ॥ | वामन पु. 61.76-77 | |
| | 4 मुरः क्लेशे च सन्तापे कर्मभोगे च कर्मिणाम् । दैत्यभेदेऽप्यरिस्तेषां मुरारिस्तेन कीर्तितः ॥ | ब्र.वै.-कृ.ख. 110. | |
| मुसली | 1 सुनन्दं नाम मुषलं त्वष्ट्रा यन्निर्मितं पुरा । तज्जहार स दुष्टात्मा तेन हन्ति रणे रिपून् ॥ | भा.पु.116.18 | |
| | 2 मुसली मुसलायुधात् । | ब्र.वै.कृ.ख.13.88 | |
| | 3 मुसलेनाशु ताडितम् । बलं बलेन ददृशे —………। | वि.पु. 5.33.30 | — — |
| मुहूर्त्तः | मुहूर्त्तास्तु मुहूर्त्तजाः । | अ.पु. 18.33; कु.पु.पू. 16.8 | — — |
| मृगः | अपत्यं तु मृगाः सर्वे मृग्याः । | वा. रा. अरण्य 14.23 | — — |
| मेघः | 1 मेहनाच्च मिहेर्धातोः मेघत्वं व्यञ्जयन्ति च । | वा.पु.51.27 | |
| | 2 मेहनान्मेघ उच्यते । | लि.पु.पू.54.46 | — — |
| मेघनादः | जातमात्रेण हि पुरा……रुदता सुमहान्मुक्तो नादो जलधरोपमः —। पिता तस्याकरोन्नाम मेघनाद इति स्वयम् ॥ | वा.रा.उत्तर 12.31 | — — |
| मेघवाहनः (कल्पः) | यत्र विष्णुर्महाबाहुः मेघो भूत्वा महेश्वरम् । दिव्यं वर्षसहस्रन्तु अवहन् कृत्तिवाससम् ॥ | वा.पु.पू.21.46 | — — |
| मेदिनी* | 1 मेदसा प्लाविता सर्वा पृथिवी……… मेदोगन्धा तु धरिणी मेदिनीत्यभिसंज्ञिता ।: | वा.रा.उत्तर 3.51.53 | 8 8 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 मधुकैटभयोः कृत्स्ना मेदसाऽभि-परिप्लुता । तेनेयं मेदिनीति । | हरि.1.6.45 | |
| | 3 मधुकैटभयोः पूर्वं मेदसा संपरिप्लुता । ....——.......इयञ्चासीत् समुद्रान्ता मेदिनीति परिश्रुता । | वा.पु.उ.2.3 | |
| | 4 मधुकैटभयोः कृत्स्नमेदसा समभिप्लुता । तेनेयं मेदिनी (नाम) प्रोच्यते ब्रह्म-वादिभिः ।। | ब्र.पु.6.112 पद्म.पु.भूमि29.79 | |
| | 5 गतप्राणौ तदा जातौ दानवौ मधु-कैटभौ । सागरः सकलो व्याप्तस्तदा वै मेदसा तयोः ।। मेदिनीति ततो जातं नाम पृथ्व्याः समन्ततः । अभक्ष्या मृत्तिका तेन कारणेन मुनीश्वराः ।। | दे. भा. 1.9.83-84 | |
| | 6 मधुकैटभयोर्मेदः संयोगान्मेदिनी स्मृता। | दे.भा. (श.क.) | |
| मेधावी | बभूव पुत्रो मेधावी मेधावी नाम नामतः । | महा.12.169.3 – | – |
| मेध्य | इन्द्रियाण्येव मेध्यानि ——। | महा.12.240.9 – | – |
| मेषवृषणः | इन्द्रस्तु मेषवृषणस्तदाप्रभृति............... (आख्यातं) गौतमस्य प्रभावेण......। | वा.रा.बाल. 49 12 – | – |
| मैत्रः | मैत्रो ब्राह्मण उच्यते । | महा.12.60.12 – | – |
| मैथिलः | मिथिर्नाम महातेजास्तेनायं मैथिलो ऽभवत् । | वा.रा. उत्तर 57.20½ | |
| मैनाकः | 1 एतेषां (पितॄणां) मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतः श्रेष्ठा यस्या मैनाक उच्यते ।। | हरि.1.18.13 – | – |
| | 2 असूत मेना मैनाकम् । | लि.पु.पू. 6.7 | |
| | 3 ततः काले तु सम्प्राप्ते मैनाकमचलो-त्तमम् ।—.........— ........ .....— मेनका सुषुवे देवी —...............— | का. पु 40./(श.क.) | |
| मोक्षः | 1 ...........नानात्वदर्शनं ज्ञानं ज्ञानाद्वै योगमुच्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ।। | वा.पु.उ. 40.76 – | – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| मोहोपमा | प्रतिरोगिनमारोप्य तद्भेदेन कीर्तनम् । उपमेयस्य सा मोहोपमाऽसौ भ्रान्तिमद्वचः ।। | अ.पु. 344.17 | – | – |
| मौद्गल्यः | 1 मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः । | हरि.1.32.67 | | |
| | 2 मुद्गलाद् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् । | भा. पु. 9.21.33 | | |
| | 3 मुद्गलस्यापि मौद्गल्याः क्षात्रोपेताः द्विजातयः । | मा.पु.उ.37.193 म.पु.50.5 | | |
| | 4 मुद्गलाच्च मौद्गल्याः यत्रोपेता द्विजातयो बभूवुः । | वि.पु.4.9.60 | – | – |
| यक्षः❋ | 1 यक्षाम इति यैरुक्तं यक्षा एव भवन्ति वः । | वा.रा.उत्तर 4.13 | 4 | 6 |
| | 2 क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः । मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ।। देवस्तानाह संविग्नो मा मां जक्षत रक्षत । अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ।। | भा. पु. 3.20.20-21 | | |
| यजुः | यजनात् स यजुर्वेदः । | ब्रह्माण्ड पु. 1.34.22 | – | – |
| यज्ञः | 1 यष्टव्यं पशुभिर्मेध्यैरथबीजैः फलैस्तथा । हिंसा स्वभावो यज्ञस्य इति मे दर्शयत्यसौ ।। | वा.पु.पू.57.106; म.पु.119.श.क. | | |
| | 2 यष्टव्यमिति यत्नेन प्रचेताः मन्यतेऽध्वरम् । | अ.पु.29.41 | – | – |
| यज्ञेश्वरः | विष्णुनाम्ना च देवेषु वेदान्तेषु च गीयते । यज्ञेश्वरो यज्ञपुमान् प्रवृत्तैरिज्यते ह्यसौ ।। | अ.पु.378.5 | – | – |
| यतिः(विष्णुः) | 1 यमनाद् यतिरुच्यते । | हरि.3.88.52 | – | – |
| | 2 यतमानो यतिः साधुः । | लि.पु.पू.10.10; वा.पु.पू.59.24 | | |
| | 3 सन्ततं यस्य यत्नञ्च तपस्सु बालकस्य च । प्रकीर्तितो यतिस्तेन संयतः सर्वकर्मसु ।। | ब्र.वै.-ब्र.ख. 22.13 | – | – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| यन्ता (सारथिः-वशी) | यः समुत्पतितं क्रोधं निगृह्णाति हयं तथा। स यन्तेत्युच्यते सद्भिः न यो रश्मिषु लम्बते ॥ | महा.1.74.2 | – – |
| यमः❀ | 1 प्रजास्त्वयेमा नियमेन संयता नियम्य चैता तपसे न कामया। अतो यमत्वं तव देव विश्रुतम्.........। | महा. 3.281.33 | 3 31 |
| | 2 ------------ प्रजा संयमनो यमः। कर्मणामनुरूपेण यस्माद्यमयसे प्रजाः। तस्माद्वै प्रोच्यसे देव यम इत्येव नामतः। | म.पु.213.2 | |
| | 3 अहममरवरार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः। हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः ॥ | वि.पु.3.7.15 | |
| | 4 मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम्। तस्माज्जनिष्यसे मूढे प्रजासंयमनं यमम् ॥ | भा.पु.77.4 | |
| | 5 त्वमेव जगतो नाथः प्रजासंयमनो यमः। कर्मणामनुरूपेण यस्माद्यमयसे प्रजाः। तस्माद्वै प्रोच्यसे देव यम इत्येव नामतः॥ | म.पु.213.12 | |
| | 6 प्रजा संयमनो यमः | भा.पु.10.46.43 म.पु.21.3.1 | |
| यमुना | 1 यवीयसी तयोः (सावर्णि-यमयोः)तु यमी कन्या यशस्विनी। अभवत्सा सरित्श्रेष्ठा यमुना लोकभाविनी। | हरि.1.9.64 | – – |
| | 2 यमस्य भगिनी जाता यमुना तेन सा मता। | दे.पु.45.(श.क.) | |
| | 3 यमस्य भगिनी पुण्या मार्तण्ड दुहिता तथा। | वा.पु उ.15.69 | |
| ययातिः | यतिः ज्येठस्तु तेषां वै ययातिस्तु ततः परम्। | हरि.1.30.2 | – – |
| यवनः❀ | योनिदेशाच्च यवनाः। | वा.रा.बाल. 55.3.द्र.महा. 1.84.15 | 7 17 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| यादव: | 1 यादवा यदुना च ।<br>2 यादवा यदुवंशेन निरुच्यन्ते । | हरि.1.33.55<br>लि.पु.पू.68.15 | – – |
| याम: | यमस्य पुत्रा यज्ञस्य तस्माद्यामास्तु ते स्मृता: । | वा.पु.पू.10.21 | – – |
| यायातं (तीर्थं) | यत्र यज्ञे ययातेश्च····सर्पि: पयश्च सुस्राव····<br>तत्रेष्ट्वा········ययाति: लेभे लोकांश्च पुष्कलान् । | महा.9.40<br>30.31 | – – |
| योग: | आत्मप्रयत्नसापेक्षा विशिष्टा या मनो-गति: । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।। | अ.पु.379.25;<br>वि.पु.6.7.31 | — — |
| योगी | यस्य योग: स वै योगी मुमुक्षुरभिधीयते । | वि.पु 6.7.31 | — — |
| योजनगन्धा | तस्यास्तु(सत्यवत्या:)योजनाद् गन्धमाजि-घ्रन्ति नरा भुवि । तस्या योजनगन्धेति तस्या नाम परिश्रुतम् । | महा.1.57.67 | – – |
| रक्तदन्तिका | भक्षयन्त्याश्च तानुग्रान् वैप्रचितान् महा-सुरान् । रक्ता दन्ता भविष्यन्ति दाडिमी-कुसुमोपमा: ।। ततो मां देवता: स्वर्गे मर्त्य-लोके च मानवा: । स्तुवन्तो व्यवहरि-ष्यन्ति सततं रक्तदन्तिकाम् ।। | मा.पु.91.42 | – – |
| रक्तबीज: | रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरत: ।<br>समुत्पतति मेदिन्यां तत्प्रमाणो महासुर: ।। | मा.पु.83.40 | – – |
| रक्षोवती | रक्षोवती नाम पुरी राक्षसै: संवृता तु या । | कु.पु.पू.46.17 | – – |
| रजतं | राजते हि स्वधा दुग्धा पितृभि: श्रयते मही । तस्मात् पितृणां रजतमभीष्टं प्रीतिवर्धनम् ।। | मा.पु.31.65 | – – |
| रजनी मूर्च्छना | मूर्च्छनायोजना ह्येषा रजसा रजनी मता । | वा.पु.उ.24.55 | – – |
| रजेश्वर:(शिव:) | रजेश्वरं च पर्याये रजसा सुप्रतिष्ठितम् । | लि.पु.पू.92.156 | – – |
| रति: | 1 लेभे स पुरुष: (मनु:) पत्नीं शतरूपा-मयोनिजाम् । तया सार्धं स रमते तस्मात्सा रतिरुच्यते ।। | लि.पु.70.272 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 लब्धा तु पुरुषः पत्नीं शतरूपामयोनिजाम्। तया स रमते सार्धं तस्मात्सा रतिरुच्यते ॥ | वा.पु.पू.10.13 | |
| | 3 रतिर्बभूव सर्वेषां तां दृष्ट्वा सस्मितां सतीम्। रतीति तेन तन्नाम प्रवदन्ति मनीषिणः ॥ | ब्र.वै-प्र.ख.4.9 | |
| रविः | 1 अवति त्रीनिमान् लोकान् यस्मात् सूर्यः परिभ्रमन्। अव धातुः प्रकाशाख्ये ह्यवनात्स रविः स्मृतः ॥ | वा.पु.पू.50.60 | |
| | 2 अवतीमांश्च त्रीन् लोकान् तस्मात् सूर्यः परिभ्रमात्। अचिरात्तु प्रकाशेत अवनात् रविः स्मृतः ॥ | म.पु.124.4 | – – |
| रसनं | रसती रसनं भवेत्। | महा.12.240.5 | – – |
| राका | अत्यर्थं भ्राजते यस्मात् पौर्णमास्यां निशाकरः। रञ्जनाच्चैव चन्द्रस्य राकेति कलयो विदुः ॥ | वा.पु.पू.56.39 | – – |
| राक्षसः❀ | 1 रक्षामेति च तत्रान्ये····रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वा। | वा.रा.उत्तर 4.11.13 | 4 3 |
| | 2 मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते। | वि.पु 1.5.43 | |
| | 3 तदन्धकारे क्षुत्क्षामानसृजद् भगवानजः। विरूपान् श्मश्रुलानत्तुमारब्धास्ते च तां तनुम्। रक्षाम इति तेभ्योऽन्ये य ऊचुस्ते तु राक्षसाः ॥ | मा.पु.48.20 | |
| | 4 विरूपाः श्मश्रुलाः जातास्तेऽभ्यधावन्त तं प्रभुम्। नैव भोः रक्ष्यतामेष तैरुक्तं राक्षसास्तु ते ॥ | अ.पु.(वह्निपुराणम्) (श.क.) | |
| | 5 तेन सृष्टाः क्षुधात्मानस्तेऽम्भांस्यादातुमुद्यताः। अम्भांस्येतानि रक्षाम उक्तवन्तश्च तेषु च। राक्षसास्ते स्मृता लोके क्रोधात्मानो निशाचराः ॥ | वा.पु.पू.9.27 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 6 अम्भांस्येतानि रक्षाम उक्तवन्तस्तु तेषु ये । राक्षसा नाम ते यस्मात् क्षुधाविष्टा निशाचरा: ।। रक्षेति पालने चापि धातुरेव विभाष्यते ।। | लि.पु.70.225,227 | |
| | 7 रक्ष इत्येष धातुर्य: पालने स विभाव्यते । उक्तवांश्चैव यस्मात्तु रक्ष मे मातरं खशाम् । नाम्नायं राक्षसस्तस्मात् भविष्यति तवात्मज: ।। | वा.पु.उ.8.98 | — — |
| राग: | 1 रागो रागस्य शासनात् । | वा.पु.पू.5.34 | |
| | 2 यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्तिनाम् । ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभि: ।। यस्य श्रवणमात्रेण रञ्जन्ते सकला: प्रजा: । सर्वाधिरञ्जनाद्धेतोस्तेन राग इति स्मृत: ।। | (श.क) | — — |
| रागा | भूतानामेव सर्वेषां रागस्तदाभवत् । रागाद्रागेति यामाहु:—— । | महा.3.248.4 | — — |
| राघव: | रघुर्येन तु राघवा: । | वा.रा.अयो. 110.28 | — — |
| राजर्षि: | ऋषन्ति रञ्जनाद्यस्मात्प्रजा: राजर्षयस्तत: । | वा.पु.पू.61.87 | |
| राजा※ | 1 पृथुं वैन्यं प्रजा दृष्ट्वा रक्ता: स्मेति यदब्रुवन् । ततो राजेति नामास्य अनुरागादजायत ।। | महा. 12.29.131 | — — 6 17 |
| | 2 यस्मिन् धर्मो विराजते तं राजानं प्रचक्षते । | 12.91.22,12 | |
| | 3 रञ्जिताश्च प्रजा: सर्वास्तेन राजेति शब्द्यते । | महा. 12.59.127 | |
| | 4 पित्राऽपरञ्जितास्तस्य प्रजास्तेनाऽनुरञ्जिता: । अनुरागात्ततस्तस्य (पृथो) नाम राजेत्यजायत ।। | हरि.1.5.30 | |
| | 5 राजा रंजयति प्रजा: । | महा.12.56.36 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 6 पित्रा (वेनेन) परञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । अनुरागात्ततस्तस्य नाम राजेत्यजायत ॥ | वि.पु.1.13.48 | |
| | 7 राजाऽभूज्जनरञ्जनात् । | वि.पु.1.13.93, अ.पु.18.16 | |
| | 8 ततो राजेति नामास्य अनुरागादजायत । | वा.पु.उ.1.132 | |
| | 9 रागी राजसिकं स्वर्गं (कार्यं) कुरुते कर्म रागतः । रागान्धाश्च राजसिकास्तेन राजा प्रकीर्तितः ॥ | ब्र.वै.ग.ख.35.77 | |
| | 10 यो राजा स पिता माता प्रजानामेष निश्चयः । | ब्र.वै.कृ.ख.59.55 | |
| | 11 राजाऽभून्नररञ्जनात् । | अ.पु.18.15 | |
| | 12 तदा पित्रा प्रजाः सर्वाः कदा नैवानुरञ्जिताः । तेनानुरञ्जिताः सर्वा सुखैर्मुमुदिरे तदा ॥ अनुरागात्तस्य वीरस्य नाम राजेत्य (जायत) भाषत ॥ | पद्मपु.भूमिखण्ड 28.61 | |
| | 13 सा तमोबहुला यस्मात्ततो रात्रिर्नियामिका । आवृतास्तमसा रात्रौ प्रजास्तस्मात्स्वपन्त्युत ॥ | लि.पु.70.201 वा.पु.पू.9.6 | |
| राजेयाः | राजेया इति विख्याता विष्णुदत्तवरो रजिः । | अ.पु.274.17 | |
| राधा | 1 रेफो हि कोटि जन्माघं कर्मयोगं शुभाशुभम् । आकाराद् गर्भवासं च मृत्युं च रोगमुत्सृजेत् । धकार आयुषो हानिमाकारो भवबन्धनम् । श्रवणस्मरणोक्तिभ्यः प्रणश्यन्ति न संशयः ॥ | ब्र.पु.कृ-ख.13, 105–107 | |
| | 2 रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे । सर्वेप्सितं सदानन्दं सर्वसिद्ध्योघमीश्वरम् । धकारः सहवासं | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | च तत्तुल्यकालमेव च । ददाति सार्ष्टिसारूप्यं तत्त्वज्ञानं हरेः समम् । आकारस्तेजसां राशिं दानशक्ति हरे यथा । | ब्र.वै.कृ-ख. 13.107,109 | |
| | 3 'रा' शब्दोच्चारणादेव स्फीतो भवति माधवः । 'धा' शब्दोच्चारणात् पश्चाद्धावत्येव सम्भ्रमः ।। | ब्र.वै.कृ-ख. 52.37,38 | |
| | 4 'रा' शब्दोच्चारणाद्भक्तो राति मुक्तिं सुदुर्लभाम् । 'धा' शब्दोच्चारणाद्दुर्गे धावत्येव हरेः पदम् ।। 'रा' इत्यादानवचनो 'धा' च निर्वाणवाचकः । सतोऽवाप्नोति मुक्तिं च सा च राधा प्रकीर्तिता ।। रा च रासे च वचना धा एव धारणादहो । हरेरालिङ्गनादारास्तेन राधा प्रकीर्तिता । रासे संभूय गोलोके सा दधाव हरेः पुरः । तेन राधा समाख्याता पुराविद्भिर्द्विजोत्तमैः ।। राधेत्येवं च संसिद्धा राकारो दानवाचकः । स्वयं निर्वाणदात्री या सा राधा परिकीर्तिता ।। | ब्र.वै.ब्र.ख.5.25 प्र.ख.48.40.42 | |
| | 5 रा शब्दश्च महाविष्णुर्विश्वानि यस्य लोमसु । विष्णुप्राणिषु धा धात्री मातृवाचकः । धात्री माताऽह(विष्णुः)-मेतेषां मूलप्रकृतिरीश्वरी । तेन राधा समाख्याता हरिणा च पुरा बुधैः ।। | (श.क) ब्र.वै.कृ-ख. 111.57 | – – |
| रामः | 1 रामस्य लोकरामस्य । | वा.रा.बाल. 18.27.तु- वा.रा.अयो. 2.44 | |
| | 2 लोके रामाभिरामस्त्वं ——.....। | तत्रैव 24.5 | |
| | 3 रामो रमयतां श्रेष्ठः । | तत्रैव 53.1 उत्तर 58.5 तु.वा रा अयो. 61.1 उत्तर109.25 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 गुणाभिरामं रामम् । | वा.रा.मु.16.1आदय | |
| (तीर्थ) | 5 यत्र रामः.........असकृत् पृथ्वीं जित्वा । | महा.9.48.7 | |
| | 6 महानदीप्रभासाद्योः सङ्गमे स्नानकृन्नरः। रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतम् ॥ | वा.पु.उ.46.16 — | — |
| (ईश्वरः) | 7 रा शब्दो विश्ववचनो मश्चापीश्वर-वाचकः । विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः ॥ रमते रमया सार्द्धं तेन रामं विदुर्बुधाः । रमाणां रमण-स्थानं रामं रामविदो विदुः ॥ रा चेति लक्ष्मीवचनो मश्चापीश्वरवाचकः। लक्ष्मी-पतिं गतिं रामं प्रवदन्ति मनीषिणः ॥ | ब्र.वै.कृ.ख. 111.17-20 | |
| | 8 राम रामेति रामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ | पद्म.पु.उ.ख.72.335 | |
| | 9 रकारादीनि नामानि शृण्वतो मम पार्वति । मनः प्रसन्नतामेति रामनामा-भिशङ्कया ॥ | पद्म.पु.उ.ख.254. 22,23 | |
| | 10 रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदा-त्मनि । इति रामपदेनासौ परं ब्रह्मा-भिधीयते । | पद्म.पु.उ.ख. 254.21 | |
| | 11 श्रेयः कमलवासिन्याः रमणोऽयं महान् प्रभुः । तस्माच्छ्री राम इत्यस्य नाम सिद्धं पुरातनम् ॥ | पद्म.पु.उ.ख. 242.76 — | — |
| (बलराम) | 12 रामेति लोकरमणात् । | भा.पु.10.2.13 | |
| | 13 अयं हि रोहिणी-पुत्रो रमयन् सुहृदो गुणैः । आख्यास्यते राम इति........। | भा.पु.10.8.12 — | — |
| रावणः❀ | 1 रावयामास लोकान् यत्तस्माद्रावण उच्यते । | महा.3.259 40 | 4 24 |
| | 2 यस्माल्लोकत्रयं चैतद्रावितं तस्मात्त्वं रावणो नाम....। | वा.रा.उत्तर16.39 तु.अरण्य 48.3,7 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 रावणं लोकरावणम् । | वा.रा.उत्तर 16.38, युद्ध 9.20,64.19 तु.युद्ध 100.34 114.101, 129.28 उत्तर 1.18,34.11, युद्ध 20.20 | |
| | 4 रावण: शत्रुरावण: । | वा.रा.सु,22.32; 23.1,8; 50.1 यु.40.8 | |
| | 5 रावणं रिपुरावणम् । | वा.रा.यु.69.17 | |
| | 6 निसर्गाद्दारुण: क्रूरो रावणाद्रावणस्तु स: । | वा.पु.उ,9.44 | |
| रीति: | वाग्विधासम्प्रतिज्ञाने रीति: । | ग्र,पु.340.1 | — — |
| रुक्मवती | प्रद्युम्नोऽपि रुक्मिणस्तनयां रुक्मवतीं नामोपयेमे । | वि.पु.4.15.38 | — — |
| रुक्मिणी | 1 रुक्मिणी किल नामास्ति""—। | हरि. 2,47.6 तु.हरि. 2.59.14 | - - |
| | 2 तेषामवरजा कन्या रुक्मिणी रुक्म-वर्णिनी । | वराह पु.67(श.क.) | |
| रुक्मी | 1 हिरण्यरोमेत्याहुर्यं""""रुक्मी तस्या-भवत् पुत्र: । | हरि.2.59.14 | - - |
| | 2 रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तर: । रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ | भा.पु.10 52.22 | |
| रुचि: | तपसस्तेजसा बालो दीप्तिमान् सततं मुने । तपस्सु रोचते चित्रं रुचिस्तेन प्रकीर्तित: ॥ | ब्र.वै.ब्र.ख.22.20 | - - |
| रुद्र:❋ | 1 यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रताप-वान् । मांस-शोणितमज्जादो यतो रुद्र उच्यते ॥ | महा. 7.173.98 तु.ग्री,प्रे.ग्रनु. 161.7 | 3 32 |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 रुद्रो देवस्त्वं रुदनाद्रावणाच्च । | हरि.2.74.22 | |
| | 3 रोरूयमाणो द्रावणाच्चाति देव: । | तत्रैव | — — |
| | 4 ततोऽसृजत् पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् । | वा.पु.पू.9.64 | |
| | 5 एवमुक्तास्तु रुरुदुर्दुद्रुवुश्च समन्तत: । रोदनाद्रावणाच्चैव रुद्रा नाम्नेति विश्रुता: । | वा,पु.पू.9.73 | |
| | 6 रोदनात् खलु रुद्रास्ते रुद्रत्वं तेन तेषु तत् । | वा.पु.पू.25.66 | |
| | 7 अहंकाराद् रुदन् रुद्र: । | वा.पु.पू.31.32 | |
| | 8 यस्य (हरे:)····रुद्र: क्रोध समुद्भव: । | भा पु,12.5.1 | |
| | 9 अथैकादश ते रुद्रा: रुदन्तोऽभ्यक्रमंस्तथा । रोदनात्खलु रुद्रत्वं तेषु वै समजायत ॥ रुद्रास्ते खलु प्राणा —·········। | लि.पु.पू.22.23,24 | |
| | 10 स वै रुरोद देवानां पूर्वजो भगवान् भव: । —··················· अभ्यधाद्भद्रया वाचा मा रोदीस्तत्करोमि ते ॥ यस्मादरोदी: सुरश्रेष्ठ सोद्वेग इव बालक: । ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजा: ॥ | भा.पु.3.12.8.10 | |
| | 11 रुरोद सुस्वरं घोरं देवदेव: स्वयं शिव: । रोदमानं मतो ब्रह्मा मा रोदीरित्यभाषत । रोदनाद्रुद्र इत्येवं लोके ख्यातिं गमिष्यसि ॥ | कू.पु.पू.10.22-25 | |
| | 12 रुरोद सुस्वरं सोऽथ द्रवंश्च द्विजसत्तम । किं रोदिषीति तं ब्रह्मा रुदन्तं प्रत्युवाच ह । नाम देहीति तं सोऽथ प्रत्युवाच जगत्पतिम् । **ब्रह्मोवाच**—रुद्रस्त्वं देव नाम्नासि मा रोदीर्धैर्यमावह । एवमुक्तस्तत: सोऽथ सप्तकृत्वो रुरोद ह । ततोऽन्यानि ददौ तस्मै सप्त नामानि वै प्रभु: ॥ | वि.पु.1.8 3-5<br>मा.पु.52.2-6 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 13 ते रुदन्तो द्रवन्तश्च गर्हयन्त: पितामहम् । रोदनाद् द्रावणाच्चैव रुद्रा इति तत: स्मृता: ।। | म.पु.171.38 | |
| | 14 यन्निर्वहति यद्वीक्षेद्यदुग्रो यत्प्रतापवान् । मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ।। | साम्ब.पु.8.42 | |
| | 15 जातमात्र: कुमारोऽसौ रुरोद भगवान् भय: । ........ — .... — .... — .... | | |
| | 16 **ब्रह्मोवाच**—जातमात्रो रोदिषि त्वं ततो रुद्र इति स्मृत: ।। ब्रह्मणश्च रुदन् जातो रोदनाद्रुद्रनामक: । | प.पु.स्वर्गखण्डरुद्रसर्ग8 अ.पु.20.20 | |
| | 17 रुर्दु:खं दु:खहेतुर्वा तद् द्रावयति य: प्रभु: । रुद्र इत्युच्यते तस्माच्छिव: परमकारणम् ।। | शि पु.6.9.14 | |
| रुद्रा: | 1 ते रुदन्तो द्रवन्तश्च भगवन्तं पितामहम् । रोदनाद् द्रावणाच्चैव ततो रुद्रा इति स्मृता: ।। | हरि.3.14.39 | 3 33 |
| | 2 कोपकाले बभूवुर्ये सृष्टुरेकादश स्मृता: । रोदनादेव रुद्राश्च कोपिनस्तेन हेतुना ।। | ब्र.वै.ब्र.ख 22 20 | |
| रूपकं | उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदु: ।। | अ.पु.344.22 | — — |
| रेचक: | 1 नासिकापुटमङ्गल्या पीड्यैव च परेण च । औदरं रेचयेद् वायुं रेचनाद्रेचक: स्मृत: ।। | अ.पु.373.7 | |
| | 2 रेचनाद् रेचक: प्रोक्त: । | अ.पु.'61.23 | |
| | 3 मुञ्चेद् वायुं ततस्तूर्ध्वं श्वासेनैकेन मन्त्रवित् । उच्छ्वासयोगयुक्तश्च वायुमूर्ध्वं विरेचयेत् ।। | अ.पु.214.23 | – – |
| रेवती | 1 रेवतस्याथ कन्यां च रेवतीम्...... । | हरि.2.58 84.द्र.हरि 1.10.37 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 तस्यर्क्षस्य तु या कान्तिर्जाता पङ्कजिनी सर: । ततो जज्ञे तदा कन्या रूपेणा-तीवशोभना । रेवतीकान्तिसम्भूतां तां दृष्ट्वा प्रमुचो मुनि: । तस्या नाम चकारेत्थं रेवती नाम भागुरे ।। | मा.पु.75.24-25 | |
| | 3 रेवती यस्य (रेवतस्य) सा कन्या । | लि.पु.पू.66.48 | |
| रेवतीरमण: | रेवत्या सह संयोगाद्रेवतीरमण: स्वयम् । | ब्र.वै.कृ-ख.13.83 | |
| रेवन्त: | 1 जनयामास रेवन्तं रेतसोऽन्ते च भास्कर: । | वि.पु.3.2.7 | |
| | 2 रेतसोऽन्ते च रेवन्त: । | मा.पु.75.24 | |
| रैवत: | 1 तस्मादजायत सुतो रेवत्यां रैवतो मनु: । | मा.पु.75.68 | |
| | 2 रोचमानस्य रेवोऽभूद्रेवाद्रैवत एव च । | लि.पु.पू.66.48 | |
| रैवतक: | रेवत्यृक्षं च पतितं कुमुदादौ समन्तत: । कुमुदाद्रिश्च तत्पातात् ख्यातो रैवतको-ऽभवत् ।। | मा.पु.72.22-23 | |
| रोग: | 1 रुजन्ति हि शरीराणि रोगा:………… | | |
| | 2 व्याधी रोगो रुज्यते येन जन्तु: । | महा.12.318.3 | – – |
| रोमहर्षण: | 1 रोमाणि हृषितानि यस्य स रोमहर्षण: । तस्य ते सर्वरोमाणि तपसा हृषितानि यत् । द्वैपायनस्य भगवन् (तु भवान्) ततो वै रोमहर्षण: ।। | कू.पु.1.4; लि.पु.पू.1.10 | |
| | 2 तस्य वै सर्वरोमाणि वचसा हृषितानि यत् । द्वैपायनस्यानुभावात्ततोऽभूद्रो-महर्षण: ।। | स्कन्द-प्रभासखण्ड 1.6 | – – |
| रौक्मिणेय: | रौक्मिणेयो प्रतापवान् । | हरि.2.85.21, 90.20.105.78 | – – |
| रौच्य: | 1 रुचे: प्रजापते: पुत्रो रौच्यो नाम मनु: स्मृत: । | हरि.1.7.45 | – – |
| | 2 रुचे: प्रजापते: पुत्रो रौच्यो नामा-भवत्सुत: । | वा.पु.उ.38.54 | |
| | 3 रुचे रौच्य इति ख्यातिं यो यास्यति जगत्त्रये । | मा.पु.97.20 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 रौच्योऽभवत् पितुर्नाम्ना ख्यातोऽत्र वसुधातले । | मा.पु.98.7 | |
| रौद्रः | रुद्रतुल्याः गणा रौद्रा रुद्रवीर्यपराक्रमाः । | महा.गी.प्रे. 284.35 | – – – – |
| रौम्यः | सोऽसृजद् रोमकूपेभ्यो रौम्यान् नाम गणेश्वरान् । | तत्रैव | – – |
| रोहिणेयः | रोहिणी गर्भवासात्तु रौहिणेयो महामतिः । | ब्र.वै.कृ.ख.13.83 | |
| लक्ष्मणः | 1 लक्ष्मणो लक्ष्मिवर्धनः । | वा.रा.बाल. 18.27.यु.102. 15,18, तु.वा.रा. कि.32.12,यु.92. 9,उ.46.13 यु.41.10 | |
| | 2 लक्ष्मणः शुभलक्षणः । | वा.रा.यु.91.72 तु. उत्तर 44.2; कि.38.6, उत्तर 53.3 | – – |
| लवः❀ | यश्चापरो भवेत्ताभ्यां लवेन स समाहितः । निर्मार्जनीयो वृद्धाभिर्लव इत्येव नामतः । | वा.रा. उत्तर 67.8 | 6 18 |
| लिङ्ग | 1 यस्माल्लीनं जगत्सर्वं तास्मिन् लिङ्गे महात्मनः । लयनालिङ्गमित्येव प्रवदन्ति मनीषिणः ।। | स्क.पु.माहेश्वर 6.30 | |
| | 2 लयनालिङ्गमित्युक्तम् । | लि.पु.पू.19 16, स्क.पु.माहेश्वर 32.62 | |
| | 3 लयं गतो यदोङ्कारस्तदा प्रभृति पार्वति । मयोच्यमानं लिङ्गस्य प्रभावातिशयं शृणु ।। | स्कन्द पु.अवन्ती 52.29 | – – |
| (पुराणं) | 4 लिङ्गस्य चरितोक्तत्वात् पुराणं लिङ्गमुच्यते । | शि.पु. 5.44.132 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| लेखकः | शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान् । अक्षरान् वै लिखेद्यस्तु लेखकः स वरः स्मृतः ।। | म.पु.189. | – – |
| लोकालोकः | 1 प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते । | कू.पु.पू.50.14 | |
| | 2 लोकालोक इति समाख्या यदनेनाचलेन लोकालोकस्यान्तर्वर्तिनावस्थाप्यते । | भा.पु.5.20.36 | |
| | 3 अर्वाचीने तु तस्यार्वे चरन्ति रविरश्मयः । परार्धे तु तमो नित्यं लोकालोकस्ततः स्मृतः । | लि.पु.पू 53.35 | – – |
| लोकेश्वरः (विष्णुः) | यस्मात्प्रसूयते लोकः प्रभविष्णुः सनातनः । तस्माल् लोकेश्वरः श्रीमान्——....। | हरि.3.70.30 | – – |
| लोमहर्षणः | लोमानि हर्षयाञ्चक्रे श्रोतॄणां यत् सुभाषितैः । कर्मणा प्रथितस्तेन लोकेऽस्मिल्लोमहर्षणः ।। | वा.पु पू. 1.13 | |
| लोहितः | यदा चैव पुनस्त्वासील्लोहितो नाम नामतः । मत्कृतेन च वर्णेन कल्पो वै लोहितः स्मृतः ।। | लि.पु.पू. 23.8 | – – |
| वत्सः | प्रतर्दनस्य पुत्रस्तु वत्सो नाम ——........ वत्सैः संवर्धितो गोष्ठे—..........। | महा. 12.49.71 | – – |
| वदरपाचनं (तीर्थं) | 1 नाम्ना वदरपाचनम् । | महा. 9.47.37 | – – |
| | 2 (आख्यान मात्रम्) । | महा.9 47.44 | – – |
| वधूसरः (नदः) | (आख्यानम्) । | महा.1 6.7 | – – |
| वरुणः | वरान् विवृण्वतो देवान् वरदो हि वरार्थिनाम् । धातुर्वृञ् वरणे प्रोक्तस्तेनासौ वरुणः स्मृतः ।। | साम्ब. पु. 8.30 | – – |
| वरेण्यं | वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं पदम् । स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि । वृणोतेः वरणार्थत्वाज्जाग्रत्स्वप्नादिवर्जितम् । नित्यशुद्धबुद्धमेकं सत्यं तद्धीमहीश्वरम् ।। | अ. पु. 216.56 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| वल्ली | वल्ली वेष्टयते वृक्ष········—········। (पाठभेदः) वलयते··········। | महा. चि. 12.184.13 | – | – |
| वशिष्ठः | वशीभूतश्च शिष्यश्च जातः सद्यो हि बालकः। अतिप्रियश्च धातुश्च वशिष्ठस्तेन कीर्त्यते ।। | ब्र.वै.ब्र.ख. 22.12 | | |
| वसिष्ठः❀ | 1 वसिष्ठोऽस्ति वरिष्ठोऽस्ति वसे वासगृहेष्वपि । वसिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् ।। | महा.13.95.27 महा.गी.प्रे.अनु. 93.84 | 5 | 13 |
| | 2 इन्द्रियाणां वशकरो वसिष्ठ इति चोच्यते । | महा. 1.1749.1 pr. | | |
| वसिष्ठापवाहः (नदः) | एवं वसिष्ठापवाहो लोके——······ (आख्यानम् । | महा. 9.41.39 | – | – |
| वसुः | 1 वसवोऽष्टौ वसोः पुत्राः । | भा.पु.6.6.10 | | |
| | 2 वसोऽस्तु वसवोऽभवन् । | अ.पु.18.32 | | |
| | 3 वसोस्तु वसवः स्मृताः । | कू.पु.पू. 16.8 | | |
| वसुदेवः | 1 वसुदेवो वसूपमः । | हरि.2.22.99 | – | – |
| | 2 वसोस्तु कुन्तिविषयये वसुदेवः सुतोऽभवत् । | तत्रैव 2.38.50 | – | – |
| वसुधा (वसुन्धरा) | 1 ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः। | महा. चि. वन. 54.38 | – | – |
| | 2 तस्येयं वसुसम्पूर्णा वसुधा वसुधाधिपः। | तत्रैव 126.34 | | |
| | 3 वसुधा वसुसम्पूर्णा वर्धते भूतिवर्धिनी। | तत्रैव5.34.26 | | |
| | 4 आत्मप्रत्यय कोशस्य वसुधेयं वसुन्धरा। | तत्रैव5.38.23 | | |
| | 5 वसु धारयते यस्माद् वसुधा तेन चोच्यते । | वा.पु.उ.2.1 | | |
| | 6 वसु रत्नं या दधाति । | ब्र.वै.प्र.ख.9.29 | – | – |
| वसुमती (नगरी) | 1 एषा वसुमती नाम वसोस्तस्य महात्मनः । | वा.रा.बाल. 32.8 | – | – |
| (पृथ्वी) | 2 पृथिवी च तदा देवी ख्याता वसुमतीति वै । | महा.गी.प्रे.अनु. 85.79 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| वसुमान् | वसुमध्यात्समुत्पन्नो वसुमान् वसुधाश्रमः। | वा.पु.उ.4.46 | |
| वसुषेणः❀ (कर्णः) | 1 वसुना सह जातोऽयं वसुषेणो भवत्विति। | महा. 1.104.15 | 6 19 |
| | 2 वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम्। नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः॥ | महा. 3.293.12 | |
| वाक्यार्थोपमा | वाक्यार्थेनैव वाक्यार्थोपमा स्यादुपमानतः। | अ.पु.344.19 | -- -- |
| वाग्दुष्टः | ललाटं विद्यते चास्य मुखवैवर्ण्यमेव च। स्वभावाद् विकृतं गच्छेन्मनोवाक्कायकर्मभिः। अभियोगेऽथवा साक्ष्ये वाग्दुष्टः प्रकीर्तितः॥ | अ. पु. 253.44 | -- -- |
| वाजी | यजूंषि यैरधीतानि तानि विप्रैः द्विजोत्तम। वाजिनस्ते समाख्याताः सूर्योऽप्यश्वो ऽभवद्यतः॥ | वि. पु. 3.5.28 | -- -- |
| वामदेवः | वामत्वाच्च देवस्य वामदेवत्वमागतः। -- --- ........ ....... ततश्च वामदेवेति ख्यातिं यातोऽस्मि भूतले॥ | लि.पु.पू. 23.11 | -- -- |
| वामनः | 1 नृसिंह एव कथितो भूयोऽयं वामनो परः। यत्र वामनमास्थाय रूपं ब्रह्मविदां वरः॥ | महा. हरि. 3.48.1 | – – |
| | 2 अणुर्वामननामासि यतस्त्वं नाख्यया। | तत्रैव3.88.51½ | |
| वामनः(पुराणं) | वामनस्य तु वामनः। | शि.पु.5.44.134 | |
| वायुः | आवृणोद्धि तथाकाशं स्पर्शमात्रं द्विजोत्तमाः। आवृणोद्रूपमात्रं तु वायुर्वाति क्रियात्मकः॥ | लि.पु.पू. 3.22 | -- -- |
| वारणः | 1 वरणाद्वारणः। | वा.पु.उ.8.227 | |
| | 2 वारणः शत्रुवारणः। | म.पु.48.99 | -- -- |
| वाराणसी | 1 वरणायाः तथा ह्यस्या मध्ये वाराणसी पुरी। | कू.पु.पू.31.63 | |
| | 2 वरणा च नदी चासी मध्ये वाराणसी तयोः। | अ.पु.112.6 | |

| 1 | 2 | 3 | 4 |
| --- | --- | --- | --- |
| | 3 वाराणसी नाम पुरी गङ्गातीरे मनोहरे । वरणायास्तथा वासेर्मध्ये चापाकृति: सदा ।। | का.पु.50. | |
| | 4 क्षेत्रागतमलङ्कृत्य जाह्नव्या सह सङ्गता । वरणा नाम तत्रैव गङ्गासिश्च सरिद्वरा ।। | शि. पु. सनत्कुमारसंहिता 45.111 | |
| | 5 असिश्च वरणा यत्र क्षेत्ररक्षाकृतौ कृते । वाराणसीति विख्याता तदारभ्य महामुने । असेश्च वरणायाश्च सङ्गमं प्राप्य काशिका ।। | स्कन्द-काशीखण्ड 30.70 | |
| | 6 चरणाद्दक्षिणात्तस्य विनिर्गता सरिद्वरा । विश्रुता वरणेत्येव सर्वपापहरा शुभा । सव्यादन्या द्वितीया च असिरित्येव विश्रुता ।...... तयोर्मध्ये तु यो देश: तत्क्षेत्रं योगशायिन: ।......तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा ।। | वामन पु. 3.24.28 | |
| वाराह: | 1 अयन्तु कथित: कल्पो द्वितीयस्याऽपि भारत । वाराह इति विख्यातो यत्रासीत् शूकरो हरि: ।। | भा. पु. 3.11.37 | -- -- |
| वाराहं (तीर्थं) | 2 ततो गच्छेत् धर्मज्ञ वाराहं तीर्थमुत्तमम् । विष्णुर्वराहरूपेण पूर्वं यत्र स्थितो ऽभवत् ।। | महा. 3.83.18 | -- -- |
| (पुराण) | 3 वराहस्य च वाराहं पुराणं द्वादशं मुने । | शि. पु. 5.44.133 | -- -- |
| वारुणी* | 1 वरुणस्य तत: कन्या वारुणी । | वा. रा. बाल. 43 55 | 3 24 |
| | 2 अहं ते (सङ्कर्षणस्य) दयिता कान्ता ......अहं कदम्बमालीना...... समीपं प्रेषिता पित्रा वरुणेन तवानघ ।। | हरि. 2.41.17-21 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 वरुणप्रेषिता देवी वारुणी वृक्ष-कोटरात् । पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत् ॥ | भा. पु. 10.65.19 | |
| | 4 ततस्तु सर्वजीवेषु चूर्णितेषु सहस्रशः । तदम्बुमेदसोत्सर्गात् वारुणी समपद्यत । | म.पु.249.61 | |
| वार्षिकी (नदी) | नदी भविष्यसि शुभे कुटिला वार्षिकोदका ·········वार्षिकी····· । | महा. 5.187.35 | – – |
| वाली | वालेषु पतितं बीजं सुग्रीवः समजायत । | वा.रा.7.37. 47(क्षेपक) | – – |
| वाशिष्ठः | वसिष्ठपुत्रा सप्तासन् वाशिष्ठ इति विश्रुताः । | हरि.1.7.17 | |
| वासुदेवः | 1 वसनात्सर्वभूतानां वसुत्वाद् देव-योनितः । वासुदेवस्ततो वेद्यः । | महा.5.68.3 | – – |
| | 2 छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासु-देवस्ततो ह्यहम् । | महा. 12.328.36 | |
| | 3 तस्य (वसुदेवस्य) पुत्रश्चतुर्बाहुर्वासु-देवो भविष्यति । | महा.गी.प्रे.अनु. 147.32 | |
| | 4 द्वितीयो वसुदेवाद्वै वासुदेवो भविष्यति। | हरि.2.22 60 | |
| | 5 स एव वासुदेवो वै वसुदेवसुतो बली । | तत्रैव 2.22.61 | |
| | 6 वसुदेवाद् यदुश्रेष्ठो वासुदेवो भविष्यति। | वा.पु.पू.23.207 | |
| | 7 सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ | वि.पु.2.2.12 | |
| | 8 वसति सदा हृदि यस्य वासुदेवः । | वि.पु.3.7.24 | |
| | 9 सर्वाणि तत्र भूतानि वसन्ति पर-मात्मनि । भूतेषु च सर्वात्मा वासुदेव-स्ततः स्मृतः । | वि.पु.6.5.80 | |
| | 10 भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् । धाता विधाता जगतां वासुदेव-स्ततः प्रभुः । | वि.पु.6.5.82 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 11 वासुस्सर्व निवासम्च विश्वानि सर्व-लोमसु । तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥ | ध्वन्यालोके (पृ. 621) विष्णु पुराणगत-मुद्धरणम् | |
| | 12 वासुस्सर्वनिवासश्च विश्वानि यस्य लोमसु । तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥ | ब्र वै.कृ.ख. 87.30 | |
| | 13 वसन्ति त्वयि भूतानि ब्रह्मादीनि युगक्षये । त्वं वा वससि भूतेषु वासु-देवस्तथोच्यसे ॥ | म.पु.248.46 | |
| | 14 वसुदेवान्महाबाहुर्वासुदेवो जगद्गुरुः । | कू.पु.पू.24.70 | |
| | 15 प्रागयं वसुदेवस्य क्वचिज्जातस्तवा-त्मजः । वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥ | भा.पु.10.8.14 | |
| वाह्नीकः (वाह्लीकः) | वहिश्च नाम ह्लीकश्च (ह्नीकश्च) ...... तयोरपत्यं बाह्लीकाः (वाह्नीकाः) नैषा सृष्टिः प्रजायते । | महा. 8.30.44 | – – |
| विकुक्षिः❀ | तेषां विकुक्षिर्ज्येष्ठस्तु विकुक्षित्वात् । | हरि.1.11.13<br>हरि.9.39 | 9 20 |
| विक्षेपः | स्वद्रव्यं यत्र विश्रम्भात् निक्षिपत्यवि-शङ्कितः। निक्षेपन्नाम तत् प्रोक्तं व्यवहार-पदं बुधैः ॥ | अ.पु.253.14 | |
| विघसाशी | ......अवशिष्टानि यो भुङ्क्ते तमा-हुर्विघसाशिनम् । | महा.गी.प्रे. 93.15 | – – |
| विजयः (अर्जुनः) | अभिप्रयामि संग्रामे......नाजित्वा विनिवर्तामि तेन मां विजयं विदुः । | महा.4.39.12 | – – |
| विज्ञातिः (कल्पः) | ध्यायतः पुत्रकामस्य मनस्यध्यात्मसंज्ञितम्। विज्ञातं वै समासेन विज्ञातिस्तु ततः स्मृतः ॥ | वा.पु.पू.21.53 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| वितथ: (भरद्वाजा:) | 1 ततोऽथ वितथो नाम भरद्वाजात् सुतो ऽभवत् । ततोऽथ वितथे जाते भरतस्तु दिवं ययौ ॥ | हरि.1.32.18 | | |
| | 2 पूर्वं तु वितथं तस्य कृतं वै पुत्रजन्म हि । ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ॥ | वा.पु.उ.37.152 | | |
| | 3 पूर्वं तु वितथे तस्मिन् कृते वै पुत्रजन्मनि । ततस्तु वितथो नाम भरद्वाजो नृपोऽभवत् ॥ | म.पु.49.32 | | |
| | 4 भरद्वाजस्य वितथे पुत्रजन्मनि मरुद्भिर्दत्तः ततो वितथसंज्ञामवाप । | वि.पु.4.19.19 | – | – |
| वितस्ता | वितस्तिमात्रं गर्तं तु शूलेन कृतवान् हरः । तस्या नाम वितस्तेति कृतवान् शङ्करः स्वयम् ॥ | नीलमत पु. 340 | – | – |
| विद्युज्जिह्वः | जिह्वया संलिहन्तं च राक्षसं समरे तथा । | वा. रा. उत्तर 23.18½ | – | – |
| विधिः | इदमेव विधातव्यमित्ययं विधिरुच्यते । | वा.पु.पू.59.111 | | |
| विनता | नताया विनता सुता । | वा.रा.अरण्य14.20 | – | – |
| विनशनः※ | शूद्राभीरान्प्रतिद्वेषाद् यत्र नष्टा सरस्वती। यस्मात् सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती। तस्मात्तद् ऋषयो नित्यं प्राहुर्विनशनेति च । | महा.9.36.2 महा.3.82.105 | 8 | 15 |
| विपरीतोपमा | प्रसिद्धेरन्यथा तयोः । विपरीतोपमा सा स्यात् । | अ.पु.343,12 | | |
| विपाशा | 1 उत्ततार ततः पाशैर्विमुक्तः स (वसिष्ठः) महानृषिः विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ | महा. 1.167.6 | – | – |
| | 2 (अत्रैव) अत्र वै पुत्रशोकेन वसिष्ठो भगवानृषिः । बद्ध्वात्मानं निपातितो विपाशः पुनरुत्थितः ॥ | महा. 3.130.9 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| विपुरः | द्वन्द्वानां विपुरीभावाद्विपुरं प्रोच्यते बुधैः । | वा पु.पू.4.39 | -- -- |
| विभाव: | विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते । विभावो नाम स द्वैधालम्बनोद्दीपनात्मकः। | अ.पु.339.36 | - - |
| विभावना | प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम् । यत्र स्वभाविकत्वं वा विभाव्यं सा विभावना ।। | अ.पु.344.28 | - - |
| विभावसुः (सूर्यः) | तेनासौ सम्भृतो देवो रूपेण तु विभावसुः । | महा.1.9.42 | — — |
| विभीषणः | 1 विभीषणं तं वानरभीषणम् । 2 विभीषणेनारिविभीषणेन । | वा.रा.यु.50.8 वा.रा.यु 86.35 | — — |
| विभुः | विभुः सर्वगतो यतः । | वा.पु.पू 5.39, कू.पु.पू.4.64 | - - |
| विरिञ्चः | विरिञ्च इति यः प्रोक्तः—·········स प्रजापतिरेवाहं चेतनात्सर्वलोककृत् । | महा. 12.330.29 | — — |
| विरूपाक्षः | विरूपाक्षं विरूपाक्षतरं कृतम् । | वा.रा.यु.97.33 | — — |
| विरोधः (अलंकारः) | विरोधपूर्वकत्वेन तद्विरोध इति स्मृतम् । | अ. पु. 344.29 | |
| विलोला (यमुना) | यस्माद्विलोलिता दृष्टिः मयि दृष्टे त्वयाधुना । तस्माद्विलोलां तनयां नदीं त्वं प्रसविष्यसि ।। | भा.पु. 77.6 | - - |
| विवस्वान् | वसत्यदृष्टः सर्वेषु भूतेष्वन्तर्हितो रविः । धातुर्वस निवासे इति विवस्वांस्तेन तूच्यते ।। | साम्ब.पु.8.33 | - - |
| विवहः | दारुणोत्पातसंचारो···· ——पञ्चमः । स महावेगो विवहो नाम मारुतः ।। | महा. 12.315.45 | - - |
| विशाला | 1 तेन (विशालेन) चासीदिह । स्थाने विशालेति पुरी श्रुता । 2 विशालस्य समुत्पन्ना विशाला नयनिर्मिता । | वा रा.बाल. 47.12 वा.पु.उ.24.17 | - - |
| विशेषोक्तिः | गुणजातिक्रियादीनां यत्र वैकल्पदर्शनम् । विशेषदर्शनायैव सा विशेषोक्तिरुच्यते । | अ.पु.344.27 | - - |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| विश्रवा | यस्मात्तु विश्रुतो वेदस्त्वया (विन्दुपुत्र्या) एषो ध्यायतो मम (पुलस्त्यस्य) तस्मात् स विश्रवा..........। | वा.रा.उत्तर 2.32 | — | — |
| विश्वम्भरा | विश्वम्भरा तद् भरणात् । | ब्र.वै.प्र.ख.9.33 | - | - |
| विश्वरूप: | 1 विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः । | महा.7.173.88, तु.-महा.गी.प्रे.अनु. 161.12 | - | - |
| | 2 तथैव बहुरूपत्वाद्विश्वरूप — ---इति स्मृतः । | महा. 12.291.19 | | |
| (कल्पः) | 3 तस्माद्विश्वत्वमापन्नं ये मां पश्यन्ति भूतले । तेषां शिवश्च सौम्यश्च भविष्यामि सदैव तु । तस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृत ।। | वा.पु.पू.23.72 | — | — |
| विश्दरूपा | 1 यस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृतः । विश्वरूपा तथा चेयं सावित्री समुदाहृताः ।। | वि.पु.पू.23.25 | | |
| | 2 कैषा भगवती देवी चतुष्पादा चतुर्मुखी । चतुःशृङ्गी चतुर्वक्त्रा चतुर्दन्ता चतुःस्तनी । चतुर्हस्ता चतुर्नेत्रा विश्वरूपा कथं स्मृता ।। | वा.पु.पू. 23.40, 41 | — | — |
| विश्वामित्रः❀ | विश्वेदेवाश्च मे मित्रं मित्रमस्मि गवां तथा । विश्वामित्रमिति ख्यातं-----। | महा.गी.प्रे.अनु. 93.92 | 5 | 15 |
| विश्वेदेवा: | 1 विश्वेदेवास्तु विश्वायाम् (याः) । | अ.पु.18.32, भा.पु. 6.6.7, कू.पु.पू.16.8 | | |
| | 2 दक्षस्य दुहिता ख्याता लोके विश्वेति नामतः । विधिना सा तु धर्मज्ञ दत्ता धर्माय धर्मतः । तस्या पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ।। | वा.पु.उ.14.3 | - | - |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| विषहरी | विषं संहर्तुमीशा सा तेन विषहरीति सा । | ब्र.वै.कृ.ख. 17.214 | |
| विष्णुः❀ | 1 बृहत्वाद्विष्णुरुच्यते । | महा.ग.उद्योग 70.3 | 3 35 |
| | 2 विष्णुर्विक्रमणादेव । | | |
| | 3 गतिश्च सर्वभूतानां प्रजानां चापि — व्याप्ता मे रोदसी पार्थ कान्तिश्चाप्यधिका मम । अधिभूतानि चान्तेऽहं — क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥ | महा. 12.328. 37-38 | |
| | 4 व्याप्य सर्वानिमांल्लोकान्स्थितः सर्वत्र केशव । ततश्च विष्णुनामासि धातोर्व्याप्तेश्च दर्शनात् ॥ | हरि.3.88.43 | |
| | 5 विष्णुः सर्वप्रवेशनात् । | लि.पु.70.90, वा.पु.5.33 | |
| | 6 विभुत्वाद्विष्णुरुच्यते । | कू.पु.पू.4.63,5.2 | |
| | 7 प्रविश्यान्तर्महातेजा स्वयमेवात्मसम्भवः। प्रभावादपि तदव्याप्त्या विष्णुत्वमगमत् पुनः ॥ | म.पु.2.30 | |
| | 8 यस्माद्विष्टमिदं विश्वं तस्य शक्त्या महात्मनः । तस्मात्स प्रोच्यते विष्णुः विशेर्धातोः प्रवेशनात् ॥ | वि.पु.3.1.45 | |
| | 9 एवमेकः स्थितो विष्णुः सर्वं व्याप्य प्रतिष्ठते —। | पद्म.पु.उत्तर. 131.60 | |
| | 10 स वै विष्णुस्तथा प्रोक्तः सोऽयं सर्वगतो हरिः····। | पद्म.पु.उत्तर. 131.68 | |
| | 11 न क्षीयसे न क्षरसे कल्पकोटिशतैरपि। तस्मात्त्वमक्षरत्वाच्च विष्णुरित्येव कीर्त्यसे ॥ विष्टब्धं यत्त्वया सर्वं जगत्स्थावरजङ्गमम् । जगद्विष्टम्भनाच्चैव विष्णुरेवेति कीर्त्यसे ॥ विष्टभ्य तिष्ठसे नित्यं त्रैलोक्यं सचराचरम् । | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | यक्षगन्धर्वनगरं सुमहद्भूतपन्नगम् । व्याप्तं त्वयैव विशता त्रैलोक्यं सचराचरम् । तस्माद्विष्णुरिति प्रोक्तः स्वयमेव स्वयम्भुवा ।। | म.पु.248.38-42 | |
| | 12 यस्माद्विश्वमिदं सर्वमादित्येनेह रश्मिभिः । विषु व्याप्तौ स्मृतो धातुस्तस्माद्विष्णुः स उच्यते ।। | साम्ब.पु.8.39 | |
| | 13 तस्माद्विष्टमिदं सर्वं वामनेनेह जायता । तस्मात् स वै स्मृतो विष्णुर्विशेर्धातोः प्रवेशनात् ।। | वा.पु.उ.5.13 | |
| (रामः) | 14 विष्णुमासे समुत्पन्नो विष्णुरित्यभिधीयते । | पद्म.पु.उ.ख. 242.77 | – – |
| (शिवः) | 15 शिवतत्त्वादिभूम्यन्तं शरीरादिघटादि च । व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृतः ।। | शि.पु.6.9.15 | – – |
| विष्णुपदी | निर्गता विष्णुपादाब्जात्तेन विष्णुपदी स्मृता । | ब्र.वै.प्र.कृ.11.141 | |
| विष्णुरातः | रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना । तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ।। | भा.पु.1.112.10 | |
| वीरसूः | वीरसूत्वेन वीरसूः । | महा.12.258.30 | – – |
| वृन्दावनी | पुरा बभूव या देवी ह्यादौ वृन्दावने वने । तेन वृन्दावनी ख्याता……– – । | ब्र.वै.प्र.ख.22.18 | – – |
| वृन्दा | वृन्दारूपाश्च वृक्षाश्च यदेकत्र भवन्ति च । विदुर्बुधास्तेन वृन्दां मत्प्रियां तां भजाम्यहम् । | ब्र.वै.प्र.ख. 22.19 | |
| वृन्दावनं | राधा षोडश नाम्नां च वृन्दा नाम श्रुतौ श्रुतम् । तस्याः क्रीडावनं रम्यं तेन वृन्दावनं स्मृतम् ।। | ब्र.वै.कृ.ख. 17.214 | |
| | वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम् । वृन्दया च कृता क्रीडा……—। | ब्र.वै.कृ.ख. 17.204 | – – |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| वृषः (धर्मः) | वृषो हि भगवान् धर्मः—नैघण्टुकपदाख्यातं विद्धि मां वृषमुत्तमम् ।। | महा. 12.330.23 | – | – |
| (इन्द्रः, कर्णः) | वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि । | महा.ग.कर्ण.8.23 | - | - |
| वृषध्वजः | अत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः । | लि.पु.पू 92.70 | - | - |
| वृषध्वनिः (नदी) | त्रिस्रोतसं नदीं दृष्ट्वा वृषः परमहर्षितः । ननाद नादात्तस्माच्च सरिदन्या ततोऽभवत् । वृषध्वनिरिति ख्याता देवदेवेन सा नदी ।। | लि.पु.पू.43.40 | - | - |
| वृषभध्वजः | 1 प्रीतश्चापि महादेवश्चकार वृषभं तदा । ध्वजं च वाहनं चैव तस्माद् स वृषभध्वजः ।। | महा.गी.प्रे.अनु. 77.29½ | | |
| (वृषध्वजः) | 2 वृषं चैव ध्वजार्थं मे ददौ (ब्रह्मा) | तत्रैव 141.12 | – | – |
| वृषभवाहनः | द्र —वृषभध्वजः । | | | |
| वृषभाङ्कः | ईश्वरः स गवां मध्ये वृषभाङ्कः प्रकीर्तितः। | तत्रैव 77.29 | – | – |
| वृषभेक्षणः (ऋषभेक्षणः) | आर्षभाद् वृषभेक्षणः । | महा. 5.68.7 | – | – |
| वृषलः❀ | 1 यस्मिन् विलीयते धर्मस्तं देवा वृषलं विदुः । | महा. 12.91.12 | 7 | 18 |
| | 2 वृषो हि भगवान् धर्मो यस्तस्य कुरुते ह्यलम् । वृषलं तं विदुर्देवाः — ·· । | महा· 12 91.13 | | |
| | 3 वृषो हि धर्मो विज्ञेयस्तस्य यः कुरुते लयम् । वृषलं तं विदुर्देवाः निष्कृष्टं श्वपचादिभिः ।। | महा.आश्व अपे. 1.4 3237-38 | | |
| | 4 प्रलीयते नरो यः स्यान्निरालम्बश्च यो वृषः । वृषं यश्च परित्यज्य मोक्षमन्यत्र मार्गति ।। वृषो वेदसमस्तस्मिन् यो वै सम्यङ् न पश्यति । ब्राह्मणाः क्षत्रियाः वैश्याः वृषलाश्चैव सर्वशः ।। | वा.पु.उ. 1·.20-23 | | |
| वृषली | स्ववृषं या परित्यज्य परवृषे वृषायते । वृषली सा हि विज्ञेया न शूद्री वृषली भवेत् । | स्कन्द.पु.काशी. 40.93 | - | - |

| 1 | 2 | 3 | 4 | |
|---|---|---|---|---|
| (कर्णः) | ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः। रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषा स्मृतः ॥ | महा. 7.155.24 | – | – |
| वृषाकपिः❀ | 1 कपिः श्रेष्ठ इति प्रोक्तो धर्मश्च वृष उच्यते । स देवदेवो भगवान् कीर्त्यते-ऽतो वृषाकपिः ॥ | महा.ग.द्रोग 202.136 | 3 | 36 |
| | 2 कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते । तस्माद् वृषाकपिं प्राह—। | महा. 12.330.24 | – | – |
| वृष्णिः | 1 वृषत्वाद् वृष्णिरुच्यते । | महा.5.68.3 | – | – |
| | 2 वृषणाद् वृष्णयः सर्वे.......। | हरि.1.33.55 | | |
| | 3 वृष्णेस्तु वृष्णयः सर्वे । | लि.पु.पू.68.15 | | |
| | 4 वृष्णिः। यतो वृष्टिसंज्ञामेतग्द्रोत्रमवाय । | वि,पु.4,11,28 | | |
| वेदः | जातमात्रस्तु ते वेदा क्षेत्रं विन्दन्ति तत्त्वतः । तेन वेदत्वमापन्ना यस्मा-द्विन्दन्ति तत्पदम् ॥ | हरि.3.17.49 | – | – |
| वेदवती | वेदध्वनिमाचकार जातमात्रेण कन्यका । तस्मात् ते तां वेदवतीं प्रवदन्ति मनीषिणः ॥ | ब्र.वै. (श.क.) | | |
| वेदव्यासः | द्र—व्यासः । | | | |
| | 1 एतत्तु श्रोतुमिच्छामि व्यस्ता वेदा महात्मनः। वेदव्यासस्वरूपेण तथा तेन युगे युगे ॥ | वि.पु. 3.3.2 | | |
| | 2 पराशरात्सत्यवत्यामंशांशकलया विभुः। अवतीर्णो महाभाग वेदं चक्रे चतु-र्विधम् ॥ | भा.पु.12.6.49 | – | – |
| | 3 वेदव्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु । | वा.पु.पू.58.11 | | |
| | 4 द्वीपे वदरीप्राये बादरायणमच्युतम् । स वेदमेकं बहुधा विभाजिष्यति ते सुतः ॥ | म.पु.14.16 | | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 संक्षिप्य स पुनर्वेदांश्चतुर्धा कृतवान् मुनिः । वेदव्यस्ततया लोके वेदव्यास इति श्रुतः ॥ | शि.पु.-उ.सं. 44.44 | |
| | 6 वेदविस्तारकरणाद् व्यासनामाऽभवन्मुनिः । | दे.भा.2.2.44 | |
| | 7 वेदविद् भागकर्ता च ख्यातश्च भुवनत्रये । | दे.भा.2.3.34 | |
| | 8 हिताय सर्वलोकानां वेदभेदान् करोति सः । | वि.पु 3.3.6 | |
| | 9 वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः । करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ | वि पु.3.2.57 | |
| | 10 द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं सुबहुधा कुरुते जगतो हितः (हितकाम्यया) ॥ | वि.पु.3.3.5, दे.भा.1.3.19 | |
| | 11 ययाऽसौ कुरुते तन्वा वेदमेकं पृथक् प्रभुः । वेदव्यासाभिधाना तु सा च मूर्तिर्मधुद्विषः ॥ | वि.पु.3.3.7 | |
| | 12 एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु । | वि.पु.3.3.20 | |
| वैकर्तनः (कर्णः) | उत्कृत्य विमनाः स्वाङ्गात्कवचं — — — कर्णस्तु कुण्डले छित्वा प्रायच्छ (त्व)च्च — ····ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् । | महा. 1.104.21 | |
| वैकारिकः | 1 वैकारिकादहङ्कारात् सत्त्वोद्रिक्तास्तु सात्त्विकम् । पाठभेदः–सत्त्वोद्रिक्तात्तु सात्त्विकात् । वैकारिकः ससर्गस्तु युगपत्सम्प्रवर्तते ॥ | वा.पु-पू. 4.53 | |
| | 2 वैकारिकान्मनो जज्ञे देवा वैकारिका दश । | भा.पु.2.5 30 | |
| | 3 वैकारिकादहङ्कारात् सर्गो वैकारिकोऽभवत् । | कू.पु.पू.4.22 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| वैकुण्ठः | 1 मया संश्लेषिता भूमिरद्मिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुण्ठ-त्वं ततो मम । | महा. 12.330.15 | — — |
| | 2 चाक्षुषे चान्तरे देवो वैकुण्ठः पुरुषो-त्तमः । विकुण्ठायामसौ जज्ञे वैकुण्ठै-र्देवतैः सह ।। | वि.पु 3.1.41 | — — |
| | 3 पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुर-सत्तमैः । तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम् ।। | भा पु.8.5 4 | |
| वैतरणी (नदी) | अत्र वैतरिणी नाम नदी वितरणैर्वृता । | महा.चि. 5.107.14 | — — |
| वैदेहः | 1 यस्माद्विदेहात् संभूतो वैदेहस्तु ततः स्मृतः । | वा.रा.उत्तर 57.20 | |
| | 2 अभूद्विदेहोऽस्य पितेति वैदेहः । | वि.पु 4.5.23 | — — |
| वैन्यः | 1 वेनस्य पाणौ मथिते सम्बभूव महामुने । वैन्यो नाम महीपालो यः पृथुः परि-कीर्तितः ।। | वा.पु.उ.1.93 वि.पु.1.13.9 | |
| | 2 वेनस्य मथिते पाणौ स बभूव महा-पुमान् । येन दुग्धा मही पूर्वं प्रजानां हितकारणात् ।। | अ.पु.(श.क.) | |
| | 3 वैन्यो वेनादजायत । | कू पु.पू.13.3 | — — |
| वैभ्राजः (वन-सारः) | ततो विभ्राजितं तेन (विभ्राजेन) वैभ्राजं नाम तद् वनम् । सरस्तच्च कुरुश्रेष्ठ वैभ्राजमिति संज्ञितम् । | हरि.1.23.14 | — — |
| वैयाकरणः | सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते । | महा.चि. 5.43.36 | — — |
| वैराजः | 1 विराजस्य द्विज श्रेष्ठ ! वैराजा इति विश्रुताः । | हरि.1.18 8 | — — |
| | 2 विरजस्य द्विजाः श्रेष्ठाः वैराजा इति विश्रुताः । | वा.पु.उ 11.4 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| वैवस्वत: | 1 विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यते बुधैः । | महा. 3.281.40 | — — |
| | 2 विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः । | महा. 1.70.10 | |
| (यमः) | 3 वैवस्वतो निवसति यमः संयमने पुरे। | वा.पु.पू 50.88 | — — |
| | 4 विवस्वतस्त्वं तनयः प्रथमः परिकीर्तितः । तस्माद्वैवस्वतो नाम्ना सर्वलोकस्य कथ्यते ।। | म.पु.213.7 | |
| | 5 विवस्वतः सुतो यस्मात्तस्माद्वैवस्वतस्तु सः । | मा.पु.77.2 | |
| | 6 वैवस्वतस्तु सम्भूतो मनुस्तस्यां विवस्वतः । | मा.पु.106.2 | |
| वैशालाक्षः (शास्त्रम्) | संचिक्षेप ततः शास्त्रं······ — — वैशालाक्षमिति प्रोक्तम् । | महा. 12.59.87 | |
| वैश्यः&&& | विशत्याशु पशुभ्यश्च ·· — । | महा. शान्ति 189.5 | 7 19 |
| वैश्रवणः | यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव । तस्माद्वैश्रवणो नाम··········। | वा.रा.उत्तर 3.8 | — — |
| वैष्णवं (जगत्) | 1 इषुश्चाप्यभवद्विष्णुः— ·······वैष्णवं चोच्यते जगत् । | महा. 8.24.84 | — — |
| | 2 विष्णोरयं यतो ह्यासीत्तस्माद्वैष्णव उच्यते । | पद्म.पु.उत्तर 68.3, 82.2 | |
| | 3 वह्निसूर्यब्राह्मणेभ्यस्तेजीयान् वैष्णवः सदा । रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुञ्जरः । | ब्र वै.कृ.ख.6. (श.क.) | |
| | 4 यस्यैको विष्णूराराध्यो वैष्णवः समुदाहृतः । यद्विष्णूपासना नित्यं विष्णुर्यस्येश्वरो मुने । पूज्यो यस्यैकविष्णुः स्यादिष्टो लोके च वैष्णवः ।। विष्णोरुपासको दासस्तन्मन्त्रेष्टतदाशयः । तमाहुर्वैष्णवं लोके विष्णुसेवापरायणम् ।। | पद्म.पु.उत्तराखण्ड 99./श.क. | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| वैष्णवी | विष्णोर्मता (विष्णुभक्ता) विष्णुरूपा विष्णोः शक्तिस्वरूपिणी । सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्तिता ।। | ब्र.वै.प्र.ख.57.12 | |
| वोढुः | स्वयं तपः समाप्नोति वाहयेत् प्रापयेत् परान् । ऊढुं समर्थस्तपसि वोढुस्तेन प्रकीर्तितः ।। | ब्र.वै.ब्र.ख.22 19 | -- -- |
| व्यक्तिः | आनन्दः सहजस्तस्य (ब्रह्मणः) व्यज्यते स कदाचन । व्यक्तिः सा तस्य चैतन्य-चमत्कारसाह्वया ।। | अ.पु 339.2 | |
| व्यतिरेकोपमा | यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा । | अ.पु.344.14 | — — |
| व्यवहारः | धर्मस्याख्या महाराज व्यवहार इतीष्यते । ··· ········इत्यर्थं व्यवहारस्य व्यवहार-त्वमिष्यते । | महा. 12.121.9 | — — |
| व्यसनं | अनयाद् व्यस्यति श्रेयस्तस्माद् तद् व्यसनं स्मृतम् । | अ.पु 241.14 | — — |
| व्याकरणं | 1 तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा । नाम-धातुविवेकार्थं पुरा व्याकरणं कृतम् ।। | महा. 5.276 1pr. | — — |
| | 2 वर्णाक्षरपदार्थानां संन्धिर्लिङ्गं विवक्षितम् । | महा.आश्व.अपे. 1.4.2666-67 | |
| व्याघ्रेश्वरः | व्याघ्ररूपं समास्थाय निहतो दर्पितो बली । व्याघ्रेश्वर इति ख्यातो नित्यमत्राह-मास्थितः ।। | लि.पु.पू.92.80 | — — |
| व्यानः | 1 व्यानाद् व्यायच्छते तथा । | महा.12.177.24 पु.-हरि.1.40.56 | - - |
| | 2 व्यानो विनामयत्यङ्गं व्यानो व्याधि प्रकोपनः । प्रतिदानं तथा कण्ठाद् व्यापनाद् व्यान उच्यते ।। | अ.पु.214 12 | — — |
| | 3 व्यानो व्यानामयत्यङ्गं व्याध्यादीनां प्रकोपकः । | लि.पु.पू.8.64 | — — |
| व्यासः❀ | 1 विव्यास वेदान् यस्माच्च तस्माद् व्यास इति स्मृतः । | महा. 1 57.73 | 5 15 |

| 1 | 2 | 3 | 4 |
| --- | --- | --- | --- |
| | 2 यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः । लोके व्यासत्वमापेदे ........। | महा.1.99 14 | |
| | 3 पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ । .... — .... .... — ........ | | |
| | 4 व्यासरूपमहं कृत्वा संहरामि युगे युगे। | म.पु 53.4 | — — |
| व्यूह: | 1 अव्यूहत तदा भीष्मो व्यूहं व्यूहविशारदः । | महा•भीष्मपर्व 81•12 | |
| | 2 व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना । | महा.भीष्मपर्व 81.35 | -- -- |
| | 3 अव्यूहत स्वयं व्यूहम् । | महा.6.77.11 | |
| | 4 अव्यूहतार्जुनो व्यूहम् । | महा.8.32.3 | |
| | 5 अव्यूहन्त महाव्यूहम् । | महा.6.47.10 | |
| | 6 अव्यूहन् मानुषं व्यूहम् । | महा.6 20 18 | |
| व्योमकेशः (शिव:) | सूर्याचन्द्रमसोर्लोके प्रकाशन्ते रुचश्च याः । ताः केश-संज्ञितास्त्र्यक्षे व्योमकेशस्ततः स्मृतः । | महा.ग.द्रोण 202.134 | -- -- |
| शक: | शकृद्देशाच्छकास्तथा । | वा.रा बाल55.3 | -- -- |
| शकुन्तला❀ | यस्माच्छकुन्तैः परिरक्षिता । शकुन्तलेति नामास्याः । | महा• 1.66.14 | 4 4 |
| शङ्कर: | 1 शङ्करोऽसि सदा देव ततः शङ्करतां गतः । | हरि. 3 88.45 | -- -- |
| | 2 शं रुद्रः सर्वभूतानां करोति घृणया यतः । शङ्करश्चाप्रयत्नेन तदात्मा योगविद्यया ।। | लि.पु.पू 6.22 | |
| | 3 नराणां सन्ततं विश्वे शं कल्याणं करोति यः। कल्याणं मोक्ष इत्युक्तं स एव शङ्करः स्मृतः ।। | ब्र.वै.प्र.ख. 56.67 | -- -- |
| शङ्खः (तीर्थ) | तथा पश्यन्महाशङ्ख महामेरुमिवोच्छ्रितम्। | महा.9.36.20 | -- -- |
| शक्तिः | ऐश्वर्यवाचकः शक् च तिः पराक्रमवाचकः । तत्स्वरूपा तयोर्दात्री या सा शक्तिः प्रकीर्तिता ।। | ब्र.वै.प्र.ख.2.10 | -- -- |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शक्रः | शक्तोऽयं जगतः कर्तुं सर्गानुग्रहसंग्रहान् । शक्लृ शक्तौ स्मृतो धातुः शक्रस्तेन स उच्यते ।। | साम्ब.पु.8.32 | |
| शतक्रतुः | 1 तान् क्रतून् भरतश्रेष्ठ शतकृत्वो महाद्युतिः । पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ।। | महा. 9.48.4 | -- -- |
| | 2 एकैकं क्रतुमाहृत्य शतकृत्वं शतक्रतुः । | महा.12.34.27 | |
| शतद्रु: | सा तमग्निसमं विप्र (वसिष्ठं) मनुचिन्त्य सरिद्वरा। शतधा विद्रुता यस्माच्छतुरिति विश्रुता ।। | महा. 1.167.9 | -- -- |
| शताक्षी | ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् । कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ।। | मा.पु.91.44 | -- -- |
| शतानीकः | शतानीकस्य राजर्षे ··चक्रे पुत्रं सनामानं नकुलः ।। | महा. 1.213.77 | |
| शत्रुः❀ | शत्रुः शदेः शासतेः शायतेर्वा शृणातेर्वा श्वयतेर्वापि सर्गे । उपसर्गाद्बहुधा सूदतेश्च·············। | महा. 8.29.24 | 6 21 |
| | (पाठभेदः) ~शासतेः श्यतेर्वा शृणातेर्वा श्वसतेः सीदतेर्वा । | महा. ग.कर्ण. 42.32 | |
| शत्रुघ्नः | 1 स त्वं हत्वा मधुसुतं लवणं~~ वाक्यं मे यद्यवेक्षसे । | वा.रा.उत्तर 62.19 | -- -- |
| | 2 शत्रुघ्नं शत्रुतापनम् । | वा.रा.उत्तर70.1 | |
| | 3 शत्रुघ्नो नित्यशत्रुघ्नः । | वा.रा.अयो. 1.1 | |
| शन्तनुः | 1 यं यं राजा स्पृशति वै जीर्णं संमयतो नरम् । पुनर्युवा स भवति तस्मात्ते शन्तनुं विदुः । ततोऽस्य शन्तनुत्वं वै प्रजास्विह परिश्रुतम् ।। | वा पु.उ. 37.234 | |
| | 2 यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः । शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।। | भा.पु.9.22.14 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 यं यं कराभ्यां स्पृशति जीर्णं रोगिणमेव च । पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः । तत्तस्य शन्तनुत्वं हि प्रजाभिरिह कीर्त्यते ।। | म.पु.50.43,44 | |
| शब्दः | द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्मपरं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधि गच्छति ।। | वि पु 6.5 64 | -- -- |
| शब्दालङ्कारः | ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह क्षमाः । शब्दालङ्कारमाहुस्तान् काव्यमीमांसका विदः ।। | अ.पु.342 19 | |
| शरजन्मा | 1 दिव्यं शरवणं………… —……—यत्र जातो महातेजाः कार्तिकेयोऽग्निसम्भवः ।। | वा.रा.बाल. 36.19½ | |
| | 2 श्रीमान्शरवणालयः । | महा.1.60.22 | |
| | 3 स तु गर्भः शरवणं प्राप्य ववृधे । | महा.गी.प्रे.अनु. 85.80, 86.12 | |
| शरण्यः | विमुञ्चति न पुण्यात्मा शरण्यः शरणागतान् । | तत्रैव 161.26 | -- -- |
| शरद्वान् | 1 गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः । | महा. 1.57.90 | |
| | 2 गौतमस्यासीच्छरद्वान्नाम नामतः पुत्रः —………जातः सह शरैः—……। | महा. 1.120.2 | -- -- |
| शरीरं | 1 श्रयणाच्छरीरं भवति । | महा.12.224.43 | – – |
| | 2 श्रयन्ति यस्मात् तन्मात्राः । | म.पु.3.22 | – – |
| शर्वः | 1 शर्वः शत्रूणां शासनादप्रमेयः —……… भूयः शासनाच्चेश्वरेण । | हरि.2.74.29 | – – |
| | 2 क्रोधाद्यश्चाविशल्लोकांस्तस्माच्छर्व इति स्मृतः । | महा. 7.173.27 | |
| | 3 पृथ्वीं पाति च शर्वश्च । | म.पु.56.40 | |
| शर्वाणी | सर्वान् मोक्षं प्रापयति जन्ममृत्युजरादिकम् । चराचरांश्च विश्वस्थान् शर्वाणी तेन कीर्तिता ।। | ब्र.वै.प्र.ख.57.17 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शल्यः | शल्यभूतश्च शत्रूणां····तस्माच्छल्येति नाम कल्पते···· —····। | महा. 8.23.45 | – – |
| शशाङ्कः | लोकच्छायामयं लक्ष्म तवाङ्के शश-संज्ञितम् । | हरि. 1.46.5 | |
| शशादः❀ | 1 — भक्षयित्वा शशं तात शशादो मृगयां गतः । | तत्रैव 1.11.17 | 6 23 |
| | 2 ततश्चासौ विकुक्षिगुरुणैवमुक्तश्शशाद संज्ञामवाप । | वि.पु.4.2.18 | |
| | 3 विस्मृता चाष्टका तस्य शशञ्चाददसौ वने ।···· — — — शशाद इति विख्यातो नाम्ना जातो नृपात्मजः ।। | दे.भा.7.9.48 | |
| | 4 श्रान्तो बुभुक्षितो वीर शशं चाददप श्रुतिः । — — —·········· शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ।। | भा.पु.9.67-11 | |
| शाकम्भरी❀ | 1 दिव्यं वर्षसहस्रं हि शाकेन— —···· आहारं सा कृतवती मासि मासि— आतिथ्यं च कृतं तेषां (ऋषीणां) शाकेन···· — ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् । | महा. 3.82.12.13 | 3 37 |
| | 2 ततोऽह्यमखिलं लोकमात्मदेहसमुद्भवैः । भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः । शाकम्भरीति विख्यातिं तथा यास्याम्यहं भुवि ।। | मा.पु 91.46 | |
| | 3 दिव्यं वर्षसहस्रं च शाकेन किल भारत । आहारं सा कृतवती मासि मासि नराधिप ।। ऋषयोऽभ्यागतास्तत्र देव्याः भक्तास्तपोधनः । आतिथ्यं च कृतं तेषां शाकेन किल भारत ।। ततः शाकम्भरीत्येवं नाम तस्याः प्रतिष्ठितम् ।। | पद्म.पु.स्वर्ग 28.15.16 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शाकुनव्यूह: | शकुनाया: महाव्यूह: कथित: कामदायक: । | लि.पु.उ.27.194 | – – |
| शाणपाद: (पर्वत) | यत्स शाणप्रमाणोऽस्य भक्त्या समभवन्नृप । वरं प्रादात्ततस्तस्य पर्वतस्य शाणपाद इति ख्यात:……………… । | हरि. 2.74.14,15 | – – |
| शान्तनु:❀ | 1 यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवा च भवति तस्मात्तं शन्तनुं विदः ॥ | महा.1,90.48 | 6 22 |
| | 2 शान्तोऽसीति मयोक्तस्त्वं यच्चासि तनुतां गत: । सुतनुर्यशसा लोके शन्तनुस्त्वं…………… | हरि.1.53.26 | |
| | 3 यं यं कराभ्यांस्पृशति जीर्णं यौवनमेति स: । शान्ति चाप्नोति येनाग्र्यां कर्मणा तेन शान्तनु: ॥ | वि.पु.4.20.13 | |
| शारीरं | शरीरे जायते व्याधि: शारीरो नात्र संशय: । | महा.14.12.2 | – – |
| शार्याता: | येषामेते महाराज ! शार्याता इति विश्रुता: । | हरि.1.11.7 | – – |
| शाला | वृक्षाश्चैव गता: शाखा न ताश्चैव परागता: । अत ऊर्ध्वं गताश्चान्या एवं तिर्यग्गता: पुरा । बुद्ध्वाऽन्विष्यंस्तथा न्यायो वृक्षशाखा यथा गता: । तथा कृतास्तु तै: शाखा स्तस्माच्छालास्तु ता: स्मृता: । एवं प्रसिद्धा: शाखाभ्य: शालाश्चैव गृहाणि च । तस्मात्ता वै स्मृता: शाला शालात्वं चैव तासु तत् ॥ | वा.पु.पू.8. 119-121 | – – |
| शाल्मलि: (द्वीप:) | सम्पूज्यते शाल्मलिश्च द्वीपे शाल्मलिके नृप ! | महा.6.13.6 | |
| शावस्ती | युवनाश्वस्य शावस्त: य: पुरी शावस्तीं निवेशयामास । | वि.पु.4.2.37 | |
| शितिवासा: | शितिवासा: नीलवासात् । | ब्र.वै.कृ.ख.13.82 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शिपिविष्टः | शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् । तेनाविष्टं हि यत्किंचिच्छिपिविष्टश्च यो भवेत् ।। | महा 2.330.6 | – – |
| शिलोच्चयः | शयानत्वाच्छिलोच्चयाः । | लि.पु 70.135 | – – |
| | चयनाच्च शिलोच्चयाः । | वा.पु.पू.8.11; 6.30 | – – |
| शिवः | 1 समेधयति यन्नित्यं सर्वार्थान् सर्वकर्मसु । शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ।। | महा.7.173 90 तु-महा.गी.प्रे.अनु. 161.9½ | |
| | 2 निर्मलत्वाच्छिवः स्मृतः । | लि.पु.70.88 | |
| | 3 शिवः स्यान्निर्मलो यस्मात् । | कू.पु.पू.4 64 | |
| | 4 शं नित्यं सुखमानन्दमिकारः पुरुषः स्मृतः । वकारः शक्तिरमृतं मेलनं शिव उच्यते ।। | शि.पु. 5.18.77 | |
| | 5 शिवश्च शिवः सताम् । | ब्र.वै.ब्र.ख.22.21 | |
| | 6 अनादिमलसंश्लेष प्रागभावात् स्वभावतः । अत्यन्त परिशुद्धात्मेत्यतोऽयं शिवउच्यते ।। अथवाशेषकल्याणगुणैकघन ईश्वरः । शिव इत्युच्यते सद्भि शिवतत्त्वार्थवैदिभिः ।। | शि.पु.6.9.7,8 | — — |
| | 7 शिवकल्याणवचनं कल्याण मुक्तिवाचकम् । यतस्तत्प्रभवेत्तेन स शिवः परिकीर्तितः ।। | ब्र.वै.ब्र.ख.6.50 | |
| | 8 पापघ्ने वर्तते शिश्च वश्च मुक्तिप्रदे तथा । पापघ्नो मोक्षदो नृणां शिवस्तेन प्रकीर्तितः ।। | ब्र.वै.ब्र.ख.6.52 | |
| | 9 शिशब्दो मङ्गलार्थश्च वकारो दातृवाचकः । मङ्गलार्थानां प्रदाता च स शिवः परिकीर्तितः ।। | ब्र.वै.प्र.ख.56.66 | |
| शिवदूती | 1 यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् । शिवदूतीति लोकेऽस्मिस्ततः सा ख्यातिमागता ।। | मा.पु.88.27 | |
| | 2 कौशिक्या हृदयाद्देवी निःसृता ध्यानतो हरेः । शिवदूतीति विख्याता शिवाशतसुसंवृता ।। | कालिका पु. उत्तर 5.(श क.) | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 दूतं प्रस्थापयामास शिवं शुम्भाय साम्बिका । तेन सा शिवदूतीति देवैः सर्वः प्रगीयते ॥ | कालिका पु. उत्तर 50 (श.क.) | — — |
| शिवा | 1 शिवा मुक्तिः समाख्याता योगिनां मोक्षगामिनी । शिवाय यां जपेद् देवी शिवा लोके ततः स्मृता ॥ | दे.पु.45.(श.क,) | — — |
| | 2 अपरे परमार्थज्ञाः शिवेति शिव संश्रयात् । | कु.पु.पू.12.210 | |
| | 3 शिवा कल्याणरूपा च शिवदा च शिवप्रिया । प्रिये दातरि चा शब्दः शिवा तेन प्रकीर्तिता ॥ | ब्र.वै.प्र.ख. 57.12; 27.24 | |
| | 4 शश्च कल्याणवचनः इकारोत्कृष्ट वाचकः । समूहवाचकश्चैव वाकारो दातृवाचकः ॥ श्रेयः संघोत्कृष्टदात्री शिवा तेन प्रकीर्तिता । शिवराशिमूर्तिमती शिवा तेन प्रकीर्तिता ॥ शिवो हि मोक्षवचनश्चाकारो दातृवाचकः। स्वयं निर्वाणदात्री या सा शिवा परिकीर्तिता ॥ | ब्र.वै.कृ.ख. 27.23.25 | |
| शिशुपालः | अव्यग्रः पाहि वै शिशुम् । | महा.2.40.4 | — — |
| शिष्टः | शेषशब्दात् शिष्ट इति । | वा.पु.पू.59.33 | — — |
| शिष्टाचारः | 1 शेष शब्दात् शिष्ट इति शिष्टाचारः । प्रचक्ष्यते । | वा.पु.पू,59.33 | |
| | 2 शिष्टै राचर्यते यस्मान्मनुना च पुनः पुनः । पूर्वैः पूर्वगतत्वाच्च शिष्टाचारः स शाश्वतः ॥ | वा.पु.पू.59.36 | |
| | 3 शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च वै । मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥ | वा.पु.पू.59.38 म.पु.120.(श.क.) | |
| | 4 शिषेर्धातोश्च निष्ठान्ताच्छिष्ट शब्दं प्रचक्षते । तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगे युगे ।.......... शिष्टैराचर्यते यस्मात्पुनश्चैव मनुक्षये । पूर्वैः पूर्वमतत्वाच्च शिष्टाचारः स शाश्वतः ॥ | म.पु.145.33-37 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 शिष्टै राचर्यते यस्मात् शिष्टाचारः स शाश्वतः । | म.पु.120 (श.क.) | – – |
| शिष्यः | 1 यस्त्वाचार्यपराधीनस्तद्वाक्यं शास्यते हृदि । शासने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः ॥ | (श.क.) म.पु.उ.ख.25 | – – |
| (पुत्रं पश्चात्) | 2 शेषपापहरः शिष्य इतीयं वैदिकी श्रुतिः । | वामन 60.67 | |
| | 3 तस्माच्छेषं तथा पापं हरेच्छिष्यश्च तद्वद । | वामन 60.77 | |
| | 4 शेषांस्तारयते शिष्यः । | वामन 61.29 | – – |
| शुकदेवः❀ | 1 शुक्रे निर्मथ्यमाने तु शुको जज्ञे महातपाः ।— अरणीगर्भसम्भवः । | महा. 12.311 9 | – – |
| | 2 द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥ | वा.पु. (श.क) | |
| | 3 द्वैपायनाच्छुको जज्ञे भगवानेष शङ्करः । | कू.पु.19.25 | |
| | 4 मन्थनं कुर्वतस्तस्य मुनेरग्निचिकीर्षया । अरण्यामेव सहसा तस्य शुक्रमथापतत् ॥ सोऽविचिन्त्य तथा पातं ममन्थारणिमेव च । तस्माच्छुकः समुद्भूतो व्यासाकृति मनोहरः ।........................ यतो दृष्टं शुकीरूपं घृताच्यां संभवे तदा । शुकेति नाम पुत्रस्य चकार मुनिसत्तमः ॥ | दे.भा.1.14 | 1 23 |
| शुक्रः | 1 स (उशनाः) विनिष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् । | महा. 12.278.32 | – – |
| | 2 इत्येवमुक्त्वा भगवान् मुमोच शिश्नेन शुक्रः स च निर्जगाम । विनिर्गतो भार्गववंशचन्द्रः शुक्रत्वमापे(सा)द्य महानुभावः ॥ | वामन पु.69.43 | |
| शुक्रेश्वरः | स्थापितं लिङ्गमेतत्तु शुक्रेण भृगुसूनुना । नाम्ना शुक्रेश्वरं नाम सर्वसिद्धामरार्चितम् ॥ | लि.पु.पू.92.93 | – – |
| शुचिश्रवाः | शुचीनि श्रवणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः ॥ | महा. 12.330.26 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शूद्र: | शोचन्तश्च द्रवन्तश्च परिचर्यासु ये रता: । निस्तेजसोऽल्पवीर्याश्च शूद्रास्तानब्रवीत्तु स: ॥ | वा.पु.पू.8.158 | – – |
| शुन:सख: | शुन सखसखायं मां – —। | महा.गी.प्रे.अनु. 93.102 | – – |
| शुश्रू: (माता) | शिशो: शुश्रूणाच्छुश्रू: । | महा. 12.258.31 | – – |
| शूर: | पौरुषेण च युक्त: स शूर इति स्मृत: । | वा.रा.यु. 71.59 | – – |
| शूरसेन: (देश:) | शूराश्च शूरवीराश्च शूरसेनास्तथानघ । शूरसेन इति ख्यातस्तस्य देशो महात्मन: ॥ | हरि.1.33.56 | – – |
| शेष | शेषमात्मानमालोक्य विशेषयसि त्वं पुन: । युगान्ताग्न्यवलीढेषु सर्वभूतेषु किञ्चन । यातेषु शेषो भवसि तस्माच्छेषोऽसि कीर्तित: ॥ | म.पु.248.34 | – – |
| शैल: | तत: उत्सारयामास शिला: शतसहस्रश: । धनुष्कोट्य: तदा वैन्यस्तेन शैला विवर्धिता: ॥ | हरि.1.6.11 | – – |
| शैलेश्वर: | पित्रा ते शैलराजेन पुरा हिमवता स्वयम् । मम प्रियहितं स्थानं ज्ञात्वा लिङ्गं प्रतिष्ठितम् । शैलेश्वरमिति ख्यातं दृश्यतामिह चादरात् ॥ | लि.पु.पू.92.86 | – – |
| शैव: (पुराणं) | यत्र पूर्वोत्तरे खण्डे शिवस्य चरितं बहु । शैवमेतत् पुराणं हि पुराणज्ञा वदन्ति च ॥ | शि.पु. 5.44.128 | – – |
| शैवी | शिवेन दृष्टा प्रकृति: शैवी समभवद् द्विजा: । | लि.पु.पू.3.11 | – – |
| शैव्य: | —शैव्येन शिविसूनुना । | महा.गी प्रे अनु. 93.25 | – – |
| शोणितपुरं | यत्रोत्थितो महासेन: सोऽग्निजो रुधिरे पुरे । तत्रोद्देशे पुरं चास्य –·····नाम्ना तच्छोणितपुरं भविष्यति पुरोत्तमम् ॥ | हरि.2.116 18,19 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| शौंण्डव्यूहः | शौण्डव्यूह समाख्यातः शौण्डांयाः व्यूह उच्यते । | लि.पु.उ. 27.159 | – – |
| श्मशानं | श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते । निर्वचन्ति श्मशानार्थं मुनेः शब्दार्थकोविदाः ॥……………………… शेरतेऽत्र शवा भूत्वा श्मशानं तु ततो महत् ॥ | स्कन्द पु काशी 30.103,104 | – – |
| श्यामः | श्यामो नाम महागिरिः । यतः श्यामत्वमापन्नाः प्रजाः । (पाठाधिक्यं) नवमेघप्रभः प्रांशुः श्रीमानुज्ज्वलविग्रहः ॥ | महा.6.12.17 | – – |
| श्येनः | श्येनी श्येनांश्च । | वा.रा.अरण्य 14.19 | – – |
| श्रावस्ती | 1 जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता । | हरि. 1.11.22 | — — |
| | 2 श्रावस्तीति पुरी रम्या श्राविता च लवस्य वै । | वा.रा. 107.17 | — — |
| | 3 श्रावस्तो युवनाश्वस्य जज्ञे परमधार्मिकः । श्रावस्ती निर्मिता तेन पुरी शक्रपुरी समा ॥ द्र.—शावस्ती | दे.भा.7.9.34 | |
| श्रीकण्ठः (शिव) | 1 इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकांक्षिणा मम । दग्ध्वा कण्ठं तु तद् यातं तेन श्रीकण्ठता मम ॥ | महा.गी.प्रे.अनु. 141.8 | — — |
| | 2 मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि । | महा. 12.330.65 | — — |
| श्रीपञ्चमी | तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी । श्रीजुष्टः पञ्चमी स्कन्दः तस्माच्छ्रीपञ्चमी मता ॥ | महा. 3.218.49 | — — |
| श्रीमान् | श्रीमान् नाम श्रिया वृतः । | महा.गी.प्रे.अनु. 91.5 | — — |
| श्रीवत्सलाञ्छनः | स भरद्वाजेन ससलिलेन पाणिनोरसि ताडितः सलक्षणोरस्कः संवृत्तः । | महा.12.319 42(2) | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| श्रुतकर्मा (अर्जुनपुत्रः) | श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना । जातः पुत्रस्तथेत्येवं श्रुतकर्मा......... । | महा. 1.213.76 | — — |
| श्रुतर्षिः | ऋषन्ति वै श्रुवं यस्माद्विशेषांश्चैव तत्त्वतः तस्मात् श्रुतर्षयस्तेऽपि श्रुतस्य परिदर्शनाः ।। | वा.पु.पू.59.85 | — — |
| श्रुतसेनः | ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते । सहदेवात्सुतं तस्माच्छुतसेनेति । | महा.1.213.78 (चि)1.121.85 | |
| श्रोत्रं | शृण्वती भवति श्रोत्रम् । | महा.12.240.4 | — — |
| श्रोत्रियः | श्रुतेन श्रोत्रियो भवति । | महा.5.43.36 | — — |
| श्रौतं | 1 पूर्वेभ्यो वेदयित्वेहि श्रौतं सप्तर्षयोऽब्रुवन् । ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि सा श्रुतिः ।। | म.पु.120 म.पु.120 (श.क.) | |
| | 2 विज्ञेयं श्रवणाश्छ्रौतम् । | लि.पु.पू.10.16 | |
| | 3 विज्ञेयः श्रवणाच् छ्रौतः । | वा.पु.पू.59.39 | — — |
| श्वानलोमापनयन | श्वानलोमापनयने तीर्थे—....प्राणायामै-र्निहरन्ति श्वलोमानि—— ..... —— (पाठभेदः) स्वलोमानि । | महा.3.81.51 | — — |
| श्वेतः | तस्या (ब्राह्मणस्य) ग्रे श्वेतवर्णाभः श्वेतो नाम महामुनिः ।विजज्ञेऽथ महातेजाः । | लि.पु.पू.12.8 | |
| श्वेतकल्पः | 1 श्वेतास्थिः श्वेतरोमा च श्वेतासृक् श्वेतलोहितः । तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ । | लि.पु.पू.23.3 | |
| | 2 श्वेतास्थिमांसरोमा च श्वेतत्वक् श्वेत-लाहितः । तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ ।। | वा.पु.पू.23.3 | — — |
| श्वेतवाहनः | श्वेता काञ्चनसंनाहा रथे युज्यन्ति मे हयाः । संग्रामे युध्यमानस्य तेनाहं श्वेत-वाहनः ।। | महा.4.39.13 | — — |
| षडाननः | 1 षण्णां (कृत्तिकानां) षडाननो भूत्वा जग्राहस्तनजं पयः । | वा.रा.बाल. 37.29 | — — |
| | 2 षडाननं कुमारं तु.........। | महा.गीप्रे.अनु. 86.18 | — — |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| षड्जः | षड्जस्तु षोडशः कल्पः जनाः यत्र महर्षयः। | | – – |
| (कल्पःस्वरः) | शिशिरश्च वसन्तश्च निदाघो वर्ष एव च। शरद्धेमन्त इत्येते मानसा ब्रह्मणः सुताः। उत्पन्नाः षड्जसंसिद्धाः पुत्राः कल्पे तु जातो षोडशे ।। यस्माज्जातैश्च तैः षड्भिः सद्यो जातो महेश्वरः। तस्मात्समुत्थितः षड्जः स्वरस्तूदधि-सन्निभः ।। | वा.पु.पू.21.32-34 | |
| षण्मुखः | युगपत्सर्वदेवीर्हि दिदृक्षुर्जाह्नवी-सुतः । षण्मुखो व्यसृजच्छ्रीमंस्तासां प्रीत्या महा-द्युतिः ।।। | वा पु.उ.11.40 | – – |
| षण्ठी | षष्ठांशा प्रकृते र्या सा षष्ठी प्रकीर्तिता । | ब्र.वै.ब्र.ख.43.4 | |
| षाण्मातुरः | तास्तु षट् कृत्तिका गर्भं पुपुषुर्जातवेदसः। षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो ! ततस्तेजः परीताङ्ग्यः सर्वाः काल उपस्थिते। समं गर्भं सुषुविरे कृत्तिकास्तम्। | महा.गी.प्रे.अनु. 86 8,10 | — — |
| संन्यासः | 1 काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। | महा.6.40.2; गीता 8.2 | — — |
| | 2 संन्यासः कर्मणां न्यासः कृतानामकृतैः सह। कुशलाकुशलाभ्यान्तु प्रहाणं उच्यते ।। | म.पु.145.54; वा.पु.पू.59.53 | |
| | 3 संन्यासः कर्मणां न्यासः कृतानामकृतैः सह। | अ.पु.179.3; लि.पु.पू.10.27 | — — |
| संवहः | योऽसौ वहति देवानां विमानानि विहा-यसा । चतुर्थः संवहो नाम वायुः स गिरिमर्दनः ।। | महा.12.315. 41-43 | — — |
| संवित् | 1 कृत्स्नं च विन्दते ज्ञानं यस्मान्माहात्म्य-मुत्तमम्। तस्माद्विर्देविदेश्चैव संवि-दित्यभिधीयते ।। | लि.पु 70.24; वा पु.4.37 | |
| | 2 विद्यतेऽपि च सर्वत्र तस्मिन् सर्वं च विन्दति । तस्मात्संविदिति प्रोक्तो महद्भिर्मुनिसत्तमाः ।। | लि.पु.70.25 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 विद्यते स च सर्वस्मिन् तस्मिन् सर्वं च विद्यते । तस्मात्संविदिति प्रोक्तो महान् वै बुद्धिमत्तरैः ।। | वा.पु.पू.4.38 | |
| | 4 तुल्यप्रभावस्तु यदा योगी प्राप्नोति सम्पदम् । तदा संविदिति ख्याता प्राणायामस्य संस्थितिः ।। | मा.पु.39.25 | |
| | 5 संविद्वै विन्दते यतः । | लि.पु.पू.8.72 | |
| संशयः | इदन्त्विदमिदं नेदमित्यनिश्चित्य संशयः । | वा.पु.पू.59.110 | – – |
| संशयोपमा | उभयोर्धर्मिणो स्तथ्यानिश्चयात् संशयो-पमा । | अ.पु.344.18 | – – |
| सगरः | 1 सगरस्तु सुतो बाहोर्जज्ञे सह गरेण च । | हरि.1.13.32 | |
| | 2 तस्य (और्वस्य) आश्रमे च तं गर्भं गरेणैव सहाच्युतम् । व्यजायत महाबाहुं सगरं नाम । | हरि.1.1.8 | |
| | 3 सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया । सह तेन गरेणैव जातः स सगरोऽभवत् । (पाठभेदः) गरेण सह तेनैव""।। | वा.रा.बाल. 70.38 वा.रा.अयो. 110.24 | |
| | 4 तत्र कतिपयदिनाभ्यन्तरे च सहैव तेन गरेणातितेजस्वी बालको जज्ञे । तस्यौर्वो जातकर्मादिक्रियां निष्पाद्य सगर इति नाम चकार । | वि.पु.4.3.35,36 (श.क.) | |
| | 5 अजायत महाबाहुर्गरेणैव सह द्विज । सगरो नाम तेनाभूद् बालकोऽति मनोहरः ।। | पद्म पु. स्वर्ग खण्ड 15 | – – |
| सङ्कर्षणः | 1 सङ्कर्षणात्तु गर्भस्य स तु सङ्कर्षणो युवा । | हरि.2.2.32 | |
| | 2 कर्षणेनास्य गर्भस्य स्वगर्भे चाहितस्य वै । सङ्कर्षणो नाम सुतः शुभे ! तव भविष्यति ।। | तत्रैव 2.4.6 | |
| | 3 गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः ।। | ब्र.वै.कृ.ख. 13.81 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 4 देवक्या जठरे गर्भे शेषाख्यं धाम मामकम् । तत् संनिकृष्य रोहिण्या उदरे सन्निवेशय ।। ······ गर्भसङ्कर्षणात्तं वै प्राहुः सङ्कर्षणं भुवि ।। | भा.पु.10.2.13 | |
| | 5 अनन्तरं च सत्तमं गर्भमर्द्धरात्रे योगनिद्रा रोहिण्या जठरमाकृष्य नीतवती । कर्षणाच्चासावपि सङ्कर्षणाख्यामगमत् । | वि.पु.4.15.28,29 | |
| | 6 सङ्कर्षणानि भूतानि कल्पे कल्पे पुनः पुनः । ततः सङ्कर्षणः प्रोक्तस्तत्त्वज्ञानविशारदैः ।। | म.पु.248.47 | |
| | 7 द्रष्टृदृश्ययोः सङ्कर्षणमहमित्यभिमानलक्षणं यं सङ्कर्षणमित्याचक्षते । | भा.पु.5.25.1 | |
| सङ्कल्पः | 1 सङ्कल्पं चैव सङ्कल्पात्सर्वलोकपितामहः । | कू.पु.पू.7.37 | |
| | 2 सङ्कल्पायां तु संजज्ञे विद्वान् संकल्प एव च । | वा.पु.उ.5.34 | |
| | 3 सङ्कल्पायां तु सर्वात्मा जज्ञे संकल्प एव हि । | वि.पु.1.15.109 | |
| | 4 सङ्कल्पायास्तु सङ्कल्पः कामः सङ्कल्पजः स्मृतः । | भा.पु.6.6.10 | |
| | 5 सङ्कल्पायास्तु सङ्कल्पः । | अ.पु.18.34; म.पु.5.19 कू.पु.पू.16.10 | – – |
| सङ्गमेश्वरः | स्थापितं ब्रह्मणा चापि सङ्गमे लिङ्गमुत्तमम् । सङ्गमेश्वरमित्येवं ख्यातं जगति दृश्यताम् ।। | लि.पु.पू.92.88 | – – |
| सङ्ग्रहणं | ग्राह्यते संग्रहाद् यत्र तत् संग्रहणमुच्यते । | अ.पु.288.44 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सञ्जयः | सञ्जयो नामतश्च त्वं नार्थतो दृश्यते मया । अन्वर्थनामा भव मे पुत्रो मा व्यर्थनामकः ।। | महा.5.134.7 | – – |
| सती | सब्दुद्ध्यधिष्ठातदेवी विद्यमाना युगे युगे । पतिव्रता सुशीला च सा सती परिकीर्तिता ।। | ब्र.वै.प्र.ख.57.13 | |
| सतीदेशः | नौदेहेन सती देवी भूमिर्भवति पार्थिव । | नीलमत पु.64 | – – |
| (कश्मीरः) | सतीदेश इति ख्यातं देवक्रीडं मनोहरम् ।। | नीलमत पु.66 | – – |
| सत्यः꙳ | 1 सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठित । सत्यात्सत्यं च गोविन्दस्तस्मात् सत्योऽपि नामतः ।। | महा.5.68.12 | 3 38 |
| | 2 नोक्तपूर्वं मया क्षुद्रमश्लीलं···ऋता ब्रह्मसुता वा मे सत्या देवी सरस्वती ।। सच्चासच्चैव कौन्तेय मयादेशितमात्मनि ।।····सत्यं मां ऋषयो विदुः । | महा. 12.330.10,11 | |
| | 3 सत्यायामभवत् सत्यः सत्यरूपो जनार्दनः । | कु.पु.पू.51.30 | |
| | 4 यथाभूतप्रसादन्तु सत्यमाहुर्मनीषिणः । | कु.पु. 14. | |
| | 5 सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहतस्य सत्ये । सत्यस्य सत्यामृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ।। | भा.पु.10.2.26 | |
| | 6 यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । | | |
| | 7 तत्सत्यमिति विज्ञेयं···· – ········ । ऋतमक्षरमुच्यते । सत्यमक्षरमित्युक्तम् । | पद्म पु.क्रियायोगसार 17.85.लि.पु. 2.22.8 | |
| सत्यवती | रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः । सा तु सत्यवती नाम –··········––। | महा. 1.57.54 | – – |
| सत्यवान् | सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते । तथास्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति । | महा 3.278.12 | |
| सत्यर्षिः | तन्मात्राणि च सत्यं च ऋषन्ते तेहौजसः । सत्यर्षयस्ततस्ते वै परमाः सत्यदर्शिनः ।। | वा.पु.पू.59 85 | – – |
| सदाचारः | 1 साधूनाञ्च यथावृत्तमेतदाचारलक्षणम् । | महा.गी.प्रे.अनु 104.9 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।---स सदाचार उच्यते ।। | महा.आश्व.अपे. 1.4.2498½ | |
| | 3 साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः । तेषामाचरणं यत्तु सदाचारस्स उच्यते ।। | वि.पु.3.11.3 | |
| सद्योजातः | विज्ञातः स्वेन तपसा सद्योजातत्वमागतः । सद्योजातेति ब्रह्मैतद् गुह्यं चैतत्प्रकीर्तितम् ।। | लि.पु.पू. 23.6 | – – |
| सनक | सनकश्च सनन्दश्च द्वावानन्दवाचकौ । आनन्दितौ च बालौ द्वौ भक्तिपूर्णतमौ सदा ।। | ब्र.वै.ब्र.ख.22.29 | – – |
| सनत्कुमारः❀ | 1 यथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम् । तस्मात्सनत्कुमारेति नामैतन्मे प्रतिष्ठितम् ।। | हरि. 1.17.16,17 | 5 16 |
| | 2 यथोत्पन्नस्तथैवेह कुमार इति चोच्यते । तस्मात्सनत्कुमारेति नामास्येह प्रकीर्तितम् ।। | लि.पु.70.74,95 | |
| | तस्मात्सत्कुमारोऽयमिति नामास्य वीक्षितम् । | वा.पु.पू.1.101 | |
| | 3 यथोत्पन्नस्तथैवेह कुमारः स इहोच्यते । 4 सनत्तु नित्यवचनः कुमारः शिशुवाचकः । सनत्कुमारस्तेनेममुवाच कमलोद्भव ।। | ब्र.वै.ब्र.ख.22.30 | – – |
| सनन्दनः | द्र.—सनकः | | |
| सनातनः❀ | 1 नादेन तेन महता सनातन इति स्मृतः । | महा 12.202.26 | 5 16 |
| | 2 सनातनश्च श्रीकृष्णो नित्यः पूर्णतमः स्वयम् । तद्भक्तस्तत्समः सत्यं तेन बालः सनातनः ।। | ब्र.वै.ब्र.ख.22,29 | |
| सनातनी | निर्गुणस्य च नित्यस्य वाचकस्य सनातनः । सदा नित्या निर्गुणाया कीर्तिता सा सनातनी ।। | ब्र.वै.कृ.ख.27.30 | |
| | सर्वकाले सना प्रोक्ता विस्तृते च तनोति च । सर्वत्र सर्वकाले च विद्यमाना सनातनी ।। | ब्र.वै.प्र.ख.5648; 57.27 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सन्तः | 1 सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत । सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्ष्यते ॥ | वा.पु.पू.59.19 | |
| | 2 सदिति ब्रह्मणः शब्दस्तदन्ते ये लभन्त्युत । सायुज्यं ब्रह्मणो यान्ति तेन सन्तः प्रचक्षते ॥ | लि.पु.पू.10.5 | |
| | 3 ब्राह्मणाः श्रुतिशब्दाश्च देवानां पशुमूर्तयः । संयुज्य ब्रह्मणा ह्यन्तस्तेन सन्तः प्रचक्षते ॥ | म.पु.145.20 | – – |
| सन्ध्या | लोकालोकन्तु सन्धत्ते यस्मात् सूर्यः परिग्रहम् । तस्मात् सन्ध्येति तामाहुरुषाव्युष्ट्योर्यदन्तरम् ॥ उषा रात्रिः स्मृता विप्रैर्व्युष्टिचापि त्वहः स्मृतः ॥ | वा.पु.पू.5⁰.161 | |
| सप्तचरुः (तीर्थं) | चरुञ्च श्रपयंस्तथा । सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवः ॥ | महा.पा.टि 388 पृ.267 | – – |
| सप्तसारस्वतं (तीर्थं) | एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः । सप्तसारस्वतं तीर्थं····इति सप्त सरस्वत्यो नामतः परिकीर्तिताः । सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् । | महा.9.37.28 | – – |
| समङ्गा (नदी) | समङ्गा संप्रकाशते । (आख्यानम्) | महा.3.135.1 | – – |
| समन्तपञ्चकः (देशः) | 1 स सर्वं क्षत्रमुत्साद्य····समन्तपञ्चके पञ्च चकार रुधिरह्लदान् । | महा.1.2.4 | – – |
| (कुरुक्षेत्रं) | 2 तेषां समीपे यो देशो ह्लदानां रुधिराम्भसाम् । समन्तपञ्चकमिति । | महा·1.2.7 | |
| (स्मयन्तपञ्चकः) | 3 त्रिसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । स्यमन्तपञ्चके चक्रे शोणितोदान् ह्लदान् नव ॥ | भा.पु.9.16.19 | |
| | 4 त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । समन्तपञ्चके पञ्च कृतवान् रुधिरैः ह्लदान् ॥ | पद्म.पु.124. | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सरमा❀ | सरो मा वर्धयस्वेति ततः सा सरमा ऽभवत् । | वा.रा.उत्तर 12.27 | 4 10 |
| समाधिः | 1 तस्यैव (ध्येयपदार्थस्य) कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्यान निष्पाद्यं समाधिःसोऽभिधीयते ।। | वि.पु.6.7.92 | |
| | 2 अहं ब्रह्मेत्यवस्थानं समाधिरिति गीयते । | ग.पु.44.5 | |
| | 3 अहं ब्रह्मेत्यवस्थानं समाधिः ब्रह्मणः स्थितिः । | ग.पु.49.35 | |
| | 4 द्वादशध्यानपर्यन्तं मनो ब्रह्मणि यो नरः । तुष्टे तु संयतो मुक्तः समाधिः सोऽभिधीयते ।। ध्येयमेव हि सर्वत्र ध्याता तल्लयतां गतः । पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ।। | ग.पु.240.(श.क.) | |
| | 5 यदात्मकं निर्भासं स्तिमितो दधिवत्-स्थितम् । चैतन्यरूपवद् ध्यानं तत्स-माधिरिहोच्यते ।। | अ.पु.375.1 | |
| | 6 धारणा द्वादश यामा ध्यानं द्वादश धारणाः । ध्यानं द्वादशकं यावत् समाधिरभिधीयते ।। | कू.पु.उ.11.42 | – – |
| समाधिस्थः | 1 ध्यायन् मनः सन्निवेश्य यस्तिष्ठेद-चलः स्थिरः । निर्बलानलवद् योगी समाधिस्थः प्रकीर्तितः ।। | अ.पु.375.2 | |
| | 2 मनः संकल्परहितमिन्द्रियार्थानचिन्त-यत् । भक्तःब्रह्मणि संलीनः समाधिस्थः स कीर्तितः ।। | | |
| | 3 ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः । मनस्तल्लयतां याति समाधि-स्थः स कीर्तितः ।। | ग.पु.240.(श.क.) | – – |
| समानः | 1 समानः सन्निवेशयेत् । | हरि.1.40.56 | – – |
| | 2 समानो हृद्यवस्थितः । | महा. 12.177.24 | |

| 1 | 2 | 3 | 4 |
| --- | --- | --- | --- |
| | 3 धातुष्वग्नौ च विततः समानोऽग्निः समीरणः। स एव सर्वचेष्टानामन्त-काले निवर्तकः ।। | महा.गी.प्रे.अनु. 145.दा.पृ.6017 | |
| | 4 पीत-भक्षित-माघ्रातं रक्तपित्तकफा-निलम् । समन्नयति गात्रेषु समानो नाम मारुतः ।। | अ.पु.214.10 | |
| | 5 समं नयति गात्राणि समानः पञ्च वायवः । | लि.पु.पू.8.65 | – – |
| समाह्वयः | पञ्चक्रीडावयोभिश्च प्राणिद्यूतं समाह्वयः। | अ.पु.253.29 | – – |
| समुच्चयोपमा | समुच्चयोपमातोऽन्यधर्मबाहुल्यकीर्तनात् । वहोर्धर्मस्य साम्येऽपि वैलक्षण्यं विवक्षितम् ।। | अ.पु.344.13 | – – |
| सम्पातिः | अहं न पतितो विन्ध्ये दग्धपक्षो जडीकृतः। | वा.रा.कि. 61.16 | – – |
| सम्भूयसमुत्थानं | वणिक् प्रभृतयो यत्र कर्म सम्भूय कुर्वते । तत् सम्भूयसमुत्थानं व्यवहारपदं विदुः ।। | अ.पु.253.15 | – – |
| सम्राट्❋ | 1''''न च साम्राज्यमाप्तास्ते सम्राट् शब्दो हि कृत्स्नभाक् । | महा 2.14.2 | 6 24 |
| | 2 यस्त्वयं नवमो द्वीपस्तिर्यगायन उच्यते। कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ।। | वा.पु.पू.45.86 | |
| | 3 यस्त्वयं नवमो द्वीपस्तिर्यग्यामः प्रकीर्तितः। य एनं जयते कृत्स्नं स सम्राडिति कीर्तितः ।। | म.पु.114.15 | – – |
| सरयूः❋ | 1 सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् । | महा.गी.प्रे.अनु. 155.23½ | 8 16 |
| | 2 तस्मात् सुस्राव सरसः——— सरः प्रवृत्ता सरयूः च सदा ज्ञानात् सर्वमेनं प्रचक्षते । | वा.रा.बाल. 24.9 | – – |
| सर्पः | 1 दृष्ट्वा ह्यप्रियेणास्य केशाः शीर्यन्त वेधसः। समारोहणहीनाश्च शिरसो ब्रह्मणस्तु ते ।। सर्पणात्तेऽभवन् सर्पाः। | मा.पु.48.21 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 सर्पाश्चैवावसर्पणात् । | लि.पु.70.230 | |
| | 3 सर्पाश्चैवापसर्पिण: । | वा.पु.9.32 | |
| | 4 सर्पणात्तेऽभवन् सर्पा: । | वि.पु.1.5.45 | – – |
| सर्व: | 1 असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् । सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते । | महा. 5.68.11 | – – |
| | 2 सर्व: सर्वमयो यत: । | लि.पु.70.99 | |
| | 3 सर्व: सर्व: यतस्तत: । | वा.पु.पू.5.35 | |
| | 4 सर्व: सर्वमयो यत: । | कू.पु.पू.4.64; 5.3 | |
| | 5 सर्वात्मा सर्ववित्सर्व: सर्वभूतेष्ववस्थित: । | वि.पु.5.17.9 | – – |
| सप्तसारस्वतं (तीर्थ) | एकीभूतास्ततास्तु तस्मिस्तीर्थे समागता: । सप्तसारस्वतं तीर्थ..........इति सप्त सरस्वत्यो नामत: परिकीर्तिता: ।। सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् । | महा.9.37.28 | – – |
| सर्वज्ञ: | सर्वज्ञ: सर्वविज्ञानात् । | लि.पु.70.99; वा.पु.पू.5.35 कु.पु.पू.4.64; 5.3 | |
| सर्वदमन: | 1 तं सर्वदमनेत्याहु: द्विजास्तेनास्य कर्मणा । | | – – |
| | 2 आरोहन् दमयंश्चैव क्रीडंश्च परिधावति । ततोऽस्य नाम चक्रु:........ अस्त्वयं सर्वदमन: । सर्वं हि दमयत्ययम् । स सर्वदमनो नाम । | महा.1.68.6,7 | – – |
| | 3 स सर्वदमनो नाम नागायुतबलो महान् । | हरि. 1.32.9 | |
| सर्वमङ्गला | सर्वमङ्गलशब्दश्च सम्पूर्णैश्वर्यवाचक: । आकारो दातृवचनस्तद्दात्री सर्वमङ्गला ।। | ब्र.वै.कृ.ख.27.32 | |
| | हर्षे सम्पदि कल्याणे मङ्गलं परिकीर्तितम् । तान् ददाति च सर्वेभ्यस्तेन सा सर्वमङ्गला ।। मङ्गलं मोक्षवचनं दा शब्दो दातृवाचक: । सर्वान् मोक्षान् या ददाति सा एव सर्वमङ्गला ।। | ब्र.वै प्र.ख. 57.18,19 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सर्वसहा | देवाश्च सर्वे सह नारदेन प्रकुर्वते सर्व-सहेति नाम । | महा.गी.प्रे.अनु. 126.39 | 8 23 |
| सविता | 1 सुवति स्पन्दनार्थे च धातुरेष विभाव्यते । सवनात्तेजसोऽपाञ्च तेनासौ सविता मतः ॥ | वा.पु.पू.53.54; लि.पु.पू.61.4 | |
| | 2 स्रवन्ति स्यन्दनार्थे च धातुरेषो निपात्यते । स्रवणात्तेजसो ऽद्धा च तेनासौ सविता स्मृतः ॥ | साम्ब.पु.8.18 | |
| | 3 अवति त्रीनिमांल्लोकान्यस्मादेष परि-भ्रमन् । अवेति रक्षणे धातुरवनात्स-विता स्मृतः ॥ | साम्ब.पु.8.25 | |
| | 4 महदाज्यं सूयते हि स्वयं ज्योतिर्हरिः प्रभुः । पर्जन्यो वायुरादित्यः शीतोष्णा-द्यैश्च पाचयेत् ॥ | अ.पु.216.10 | |
| | 5 सर्वलोकप्रसवनात् सविता स तु कीर्त्यते । | अ.पु. (श.क) | – – |
| सव्यसाचिन् | उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे । तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥ | महा.4.39.17 | – – |
| सहस्रनयनः | तथा भगसहस्रेण महेन्द्रः परिचिह्नितः । तेषामेव प्रभावेण सहस्रनयनो ह्यसौ । | महा.गी.प्रे.अनु. 34.28 | – – |
| सहस्राक्षः | शतक्रतुः समभवन् सहस्राक्ष'''चक्षुषः प्रभवेत्तेजो नास्त्यन्तोऽथास्य चक्षुषाम् । | महा.गी.प्रे अनु. 161.13 | – – |
| सहोक्तिः | सहोक्तिः सहभावेन कथनं तुल्यधर्मिणाम् । | अ.पु.344.23 | – – |
| सागरः | 1 खानयामास यः कोपात्पृथिवीं सागरा-ङ्किताम् । यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः । | महा. 12.29.127 | |
| | 2 खानितः सगरेणायमप्रमेयो महोदधिः । | वा.रा.युद्ध 19.31 | |
| | 3 येषां च सगरो नाम सागरो येन खानितः । | वा.रा.बाल.5.2 | |
| | 4 सागरत्वं च लेभे स कर्मणा तस्य तेन ह । | हरि.1.14.29 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 सागरं चात्मजप्रीत्या पुत्रत्वे कल्पितवान्। | वि.पु.4.4.33 | |
| साङ्ख्यं | 1 पञ्चविंशतिविज्ञानं सांख्यमित्यभिधीयते। | महा.गी.प्रे.अनु. 145.दा. | |
| | 2 साङ्ख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते। | म.पु.3.29 | |
| | 3 साङ्ख्यं तत्त्वज्ञानविनिर्णयम्। | भा.पु.1.3.10 | – – |
| सात्वतः❀ | 1 सत्त्वात् सात्त्वताः स्मृताः। | हरि.2.38.38 | 6 25 |
| | 2 यतः सत्त्वं न च्यवते यच्च सत्त्वान्न हीयते। सत्त्वतः सात्त्वतस्तस्मात्.... । | महा.5.68.7 | |
| | 3 सत्त्वान्न च्युतपूर्वोऽहं सत्त्वं वै विद्धि मत्कृतम्। जन्मनीहाभवत् सत्त्वं सात्त्वतं मां प्रकल्पय। सात्त्वतज्ञानदृष्टोऽहं सात्त्वतः सात्त्वतां पतिः॥ | महा. 12.330.12,13 | |
| | 4 तस्य (सत्त्वतस्य) नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम्।.................. सात्त्वतस्तस्य पुत्रोऽभूत् सर्वशास्त्रविशारदः॥ | कू.पु.पू. 24.35 | |
| | 5 सात्त्वतः सत्त्वसम्पन्नः। | कू.पु.पू.24.36 | |
| | 6 सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम्। योऽनन्यत्वेन मनसा सात्त्वतः समुदाहृतः। विहाय काम्यकर्मादीन् भजेदेकाकिनं हरिम्। सत्यं सत्त्वगुणोपेतो भक्त्या तं सात्त्वतं विदुः॥ | पद्म.पु.उत्तर 99: | |
| | 7 सात्त्वतः सत्त्वसंयुक्तः सात्त्वतां कीर्तिवर्धनः। सत्त्वात् सत्त्वगुणोपेतः सात्त्वतः कीर्तिवर्धनः॥ | वा.पु.उ.33.47 | – – |
| साधुः | 1 साधुः योगस्य साधनात्। | वा.पु.पू.59.24 | |
| | 2 विद्यायाः साधनात् साधुः ब्रह्मचारी गुरोर्हित.। क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते॥ साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः। यतमानो यतिः साधुः स्मृतो योगस्य साधनात्॥ | वा. पु. पू. 59.23, 25 | |

| 1 | 2 | 3 | 4 |
| --- | --- | --- | --- |
| | 3 एवमाश्रमधर्माणां साधनात् साधवः स्मृताः । | लि.पु.पू.10.9,10 | |
| | 4 दिव्यानां साधनात्साधुर्ब्रह्मचारी गुरोर्हितः । करणात् साधनाच्चैव गृहस्थः साधुरुच्यते ॥ | म.पु.145.23 | – – |
| साध्याः | 1 साध्यान् साध्या व्यजायत । | अ पु.18.32 | |
| | 2 साध्यो गणस्तु साध्यायाः । | भा.पु.6.6.7 | |
| | 3 साध्या साध्यानजीजनत् । | कू.पु.पू.16.8 | – – |
| सारस्वतः | 1 सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् । अपान्तरतमा नाम''''॥ | महा. 12.337.37 | – – |
| | 2 तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः । सारस्वत इति ख्यातः''''। | महा.9.50.21 | – – |
| सावर्णः | 1 पूर्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः । सवर्णत्वान्मनोर्भूयः सावर्ण इति चोक्तवान् । | हरि.1.9 19 | – – |
| | 2 मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते ॥ | हरि.1.9.64 | |
| | 3 यस्मात्सवर्णास्तेषां वै ब्रह्मादीनां कुमारकाः । सवर्णा मनवस्तस्मात् सवर्णत्वं हि ते यतः ॥ | वा.पु.उ.38.53 | |
| | 4 छाया संज्ञासुतश्चापि सावर्णिः सुमहायशाः । भाव्यः सोऽनागते काले मनुः सावर्णिकोऽष्टकः ॥ | मा.पु.105.24 | |
| सावर्णि; | 1 जनयामास तस्यां तु पुत्रं च मनुरूपिणम् । सवर्णत्वाच्च सावर्णिर्मनो र्वैवस्वतस्य च ॥ | म.पु.11 9 | |
| | 2 पूर्वजस्य मनोस्तुल्यश्छायासंज्ञासुतोऽग्रजः । ततः सावर्णिकीं संज्ञामवाप तनयो रवेः ॥ | मा.पु.78.32 | |
| | 3 छाया संज्ञासुतो योऽसौ द्वितीयः कथितो मनुः । पूर्वजस्य सवर्णोऽसौ सावर्णिस्तेन कथ्यते ॥ | वि.पु.3.2.13 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सावस्तिः | तस्य (युवनाश्वस्य) पुत्रोऽभवद्वीरः साव-स्तिरिति विश्रुतः। निर्मिता येन सावस्तिः गौडदेशे महापुरी ।। | कू.पु.पू.20.19 | |
| सावित्र | त्वयि पुत्रशतं चैव सत्यवान् जनयिष्यति । ते चापि सर्वे राजानः - ख्यातास्तव नामधेयाश्च भविष्यन्तीह शाश्वताः ।। | महा. 3.281 57 | – – |
| सावित्री: | 1 उत्थिता च शिरो भित्त्वा सावित्री तेन उच्यते । (ततः स्मृतेयं गायत्री) सावित्रीयं ततो यतः। प्रकाशनात् सा सवितुः (वाग्रूपत्वात् सरस्वती)। | वा.पु.पू.25.49 अ.पु 216 2 | |
| | 2 सर्वलोकप्रसवनात् सविता स तु कीर्त्यते यतस्तद्देवता देवी सावित्रीत्युच्यते ततः । वेदप्रसवनाच्चापि सावित्री प्रोच्यते बुधैः ।। | (ब्राह्मणप्रशंसा) अ.पु. (श.क) | |
| | 3 ततः संजपतस्तस्य भित्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् ।। शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप ।। | म.पु.3.30-32 | – – |
| साहञ्जनी | साहञ्जस्तस्य (कार्तस्य) चात्मजः । साहञ्जनी नाम पुरी येन राज्ञा निवेशिता ।। | हरि.33.3½ | |
| साहसं | 1 स(य)हसा क्रियते कर्म यत्किञ्चिद् बलदर्पितैः । तत्साहसमिति प्रोक्तं विवादपदमुच्यते ।। | अ पु.253.26 | |
| | 2 सहसा क्रियते कर्म यत्किञ्चिद् बल-दर्पितैः। तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ।। | (श.क.) | – – |
| सिद्धाश्रमः | एष पूर्वाश्रमो राम वामनस्य (विष्णोः) महात्मनः। सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः। | वा.रा.बाल. 29.24 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सिनीवाली | 1 तनुत्वात् सा सिनीवाली……। | महा.3.208.5 | – – |
| | 2 सिनीवालीप्रमाणेन क्षीणशेषो निशाकरः। अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृतः ॥ | वा.पु.पू.56.52 | |
| सीता⚘ | 1 अथ मे कृषतः क्षेत्रं लांगलादुत्थिता मम। क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता। भूतलादुत्थिता सा तु……………। | वा.रा.बाल. 66.13.14 | 3 39 |
| | 2 तस्य पुत्रार्थं यजन भुवं कृषतः सीरे सीता दुहिता समुत्पन्ना। | वि.पु.4.5.28 | |
| | 3 ह्रस्वरोमात्मजो विद्वान् सीरध्वज इति श्रुतिः। उद्भिन्ना कृषता येन सीता राज्ञा यशस्विनी ॥ | वा.पु.उ. 27.15 | |
| | 4 सीतामुखोद्भवात् सीता इत्यस्यै नाम चाकरोत्। | पद्म.पु. (श.क.) | |
| सुग्रीवः | 1 सुग्रीवः संहतग्रीव.। | वा.रा.कि.13.3 | – – |
| | 2 सुग्रीवः विपुलग्रीवः। | वा.रा.कि. 14.2, 15.28 | |
| | 3 ग्रीवायां पतितं बीजं सुग्रीवः समजायत। | वा.रा.7.37.39 (क्षेपकः) | |
| सुतसोमः | 1 सुते सोमसहस्रे तु सोमार्कसमतेजसम्। सुतसोमं महेष्वासं सुषुवे भीमसेनतः। | महा. 1.213.75 | -- -- |
| | 2 तस्मिन् (पुरे) जातः सोमसंक्रन्दमध्ये यस्मात्तस्मात्सुतसोमोऽभवत् सः ॥ | महा. 7.22.22 | |
| सुदर्शनः (चक्रं) | 1 दर्शनीयञ्च लोकेषु चक्रमादित्यवर्चसाम्। नाम्ना सुदर्शनं नाम……। | हरि.2.43.13 | |
| (अग्निपुत्रः) | 2 तस्याः (सुदर्शनायाः) समभवत्पुत्रो नाम्नाग्नेयः सुदर्शनः। सुदर्शनस्तु रूपेण पुर्णेन्दुसदृशोपमः। | महा.गी.प्रे.अनु. 2.36 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 वरायुधोऽयं (धं हि) देवेश सर्वायुध निवर्हणः (म्) सुदर्शनो (म्) द्वादशारो (म्) यो मनः सदृशो जवी (षण्णाभि-द्विजवज्जवे) ॥ | वामन.पु.82.25 | |
| | 4 सुदर्शनो नाम महान् जम्बूवृक्षः सना-तनः । — — — — ........... तस्य नाम्ना समाख्यातो जम्बूद्वीपो वनस्पतेः ॥ | म.पु.113.75 | |
| | 5 श्यामश्रोण्यधिरोचिष्णु दुकूलस्वर्ण-मेखलम् । समचार्व्वङ्घ्रि जङ्घोरु निम्नजानुः सुदर्शनम् ॥ | भा.पु 4.24.51 | |
| सुदर्शना | तस्यां जज्ञे तदा नद्यां (नर्मदायां) कन्या राजीवलोचना । नाम्ना सुदर्शना राजन् रूपेण च सुदर्शना ॥ | महा.गी.प्रे.अनु. 2.19 | – – |
| सुद्युम्नः | पितॄणां तृप्तिकर्तारं बुधादिति हि नः श्रुतम् । प्राप्य पुत्रं सुविमलं सुद्य (द्यु)म्न इति विश्रुतम् ॥ | कू.पु.पू.20.8 | |
| सुपर्णः | सर्वभूतानि विस्मितान्यब्रुवन्.....—.... सुरूपपत्रमालक्ष्य सुपर्णोऽयं भवत्विति ॥ | महा.1.29.21 | – – |
| सुभूमिका (तीर्थ) | ....—आक्रीडभूमिः [सा—तासामप्सरसां शुभा । सुभूमिकेति विख्याता सरस्वत्या-स्तटे वरे ॥ | महा.9.37.8 | – – |
| सुमतिव्यूहः | कथितः सुमतिव्यूहः सुमत्या व्यूह उच्यते। | लि पु.उ.27.199 | |
| सुमनस् (पुरुषः) | मनो ह्लादयते यस्मात्प्रियं चापि ददाति च । तस्मात्सुमनसः प्रोक्ताः—......—। | महा गी.प्रे.अनु. 98.20 | – – |
| सुरः | 1 अदितेस्तु सुता वीर जगृहुस्तां (वारुणीं) —....सुरास्तेनादितेः सुताः । | वा.रा.बाल. 45.37 | – – |
| | 2 सुरा-प्रतिग्रहाद् देवाः सुरा इत्यभि-विश्रुताः । | वा.रा.बम्बई संस्करण (सं. इ.डि.ग्रंथाद् उद्घृतम्) | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| सुरभिः | 1 स (दक्षप्रजापतिः) गतस्तस्य तृप्तिं तु गन्धं सुरभिमुद्गिरन् । ददर्शोद्गार-संवृत्तां सुरभिं मुखजां स्मृताम् ।। | महा.गी.प्रे.अनु. 77.17 | -- |
| | 2 गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः । गवां प्रधाना सुरभीगोलोके सा समुद्भवा ।। | ब्र.वै.प्र.ख.47.1 | |
| सुवर्णः | (तपस्वी ब्राह्मणः) वर्णतो हेमवर्णः स सुवर्ण इति पप्रथे । | महा.गी.प्रे.अनु. 98.3 | -- |
| सुवीरः | सर्वलोकेषु विख्यातः सुवीरो नाम नामतः । | तत्रैव 2.10 | -- |
| सूचीमुखः | सूच्यग्रविवरमुखपर्वतदेहवानहम् । | गरुड पु.8.59 (प्रेतखण्ड) | |
| सूतः | 1 वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः । सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतः ।। ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय देवाय ततः सूतो व्यजायत ।। | वा.पु.पू.1.28-29; 62.42,43 | |
| | 2 सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः । तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ।। | वा.पु.उ.1.135; ब्रह्म.4.60. वि.पु.1.13.52 | |
| | 3 त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते हरिः । सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ।। | लि.पु.1.10; कू.पु.पू.1.6 | |
| | 4 ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति । पृषदाज्याद् समुत्पन्नः सूतः पौराणिको द्विजः ।। | (श.क.) अ.पु. | -- |
| सूत्रं | अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।। | वा.पु.पू.59.117 | -- |
| सूर्य | 1 तस्मात्सूर्यः परिभ्रमात् । | म.पु.101 | |
| | 2 शश्वच्च जायते यस्माच्छश्वत्सन्तिष्ठते यतः । तस्मात्सर्वैः स्मृतः सूर्यो निगमज्ञैर्मनीषिभिः ।। | साम्ब.पु.8.19 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 सूते च रमते चैव यजते चैव कथ्यते । सूर्यः……। | | |
| सेतुबन्धः | 1 एष सेतुर्मया बद्धः सागरे लवणार्णवे । तव हेतोः विशालाक्षि जयसेतुः सुदुष्करः । सेतुबन्ध इति ख्यातः—। | वा.रा.रा.पुद्ध 26.11,15 | – – |
| | 2 ततोऽतिहृष्टः ह्यवगेन्द्रयूथपैः महानगेन्द्रप्रतिमैर्युतो नलः । बनन्ध सेतुं शतयोजनायतं (सुविस्तृत) सुविस्तरं पर्वतपादपैर्दृढम् ।। | अध्यात्म रा.लंका 3.81 | – – |
| सेनानी | 1 सेनापत्येन तं देवाः पूजयित्वा महालयम् ।……सेनापत्यमवाप्तवान् । | महा.गी.प्रे.अनु. 86.28 | – – |
| | 2 सुरसेनागणपतिं ततस्तममलद्युतिम् । अभ्यसिञ्चन् सुरगणाः समेत्याग्नि पुरोगमाः ।। | वा.रा.बाल. 37.31 | – – |
| | 3 सेन्द्रोपेन्द्रैर्महाभागैर्देवैरग्निसुतः प्रभुः । सेनापत्येन दैत्यारिरभिषिक्तः प्रतापवान् ।। देवसेनापतिस्त्वेष पठ्यते नरनायकः ।। | वा.पु.उ 11.48.49 | – – |
| सैंहिकेयः | 1 सिंहिका चाभवत्कन्या……सैंहिकेया इति ख्यातास्तस्या पुत्रा महाबलाः । | हरि.1.3.70 | |
| | 2 सिंहिका चाभवत् कन्या विप्रचित्तेः परिग्रहः । राहुप्रभृतयस्तस्यां सैंहिकेया इति श्रुता ।। | अ.पु.19.6 | – – |
| सोमं (तीर्थं) | यत्रायजद् राजसूयेन सोमः साक्षात्पुरा विधिवत्…। | महा. 9.42.39 | – – |
| सौदासः | 1 सुदासस्य सुतस्त्वासीद् सौदासो नाम पार्थिवः । | हरि 1.15.21 | |
| | 2 सुदासस्य सुतः प्रोक्तः सौदासो नाम पार्थिवः । | वा.पु.उ.26.175 लि.पु.पू.66.26 | |
| | 3 सुदासात्सौदासः । | वि.पु.4.19.71 | |
| | 4 —सुदासो नाम धार्मिकः । सौदासस्तस्य तनयः— … | कू.पु.पू.21.12 | – – |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| **सौनन्दं (मुसलः)** | सौनन्दं नाम बलवान् निरानन्दकरं द्विषाम् । | हरि.3.35.63, 2.43.12 | |
| **सौमित्रिः** | सौमित्रिर्मित्रनन्दनः । | वा.रा सु. 33.28,यु.87.7 | – – |
| **सौरभयी** | सासृजत् सौरभेयीस्तु सुरभिर्लोकमातृकाः । सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ।। | महा.गी.प्रे.अनु. 77 18 | – – |
| **स्कन्दः** | 1 स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भपरिश्रवात् । | वा.रा.बाल. 37.27 | |
| | 2 तत्स्कन्नं तेजसा तत्र संभृतं जनयत्सुतम् । ऋषिभिः पूजितं स्कन्नमनयत् स्कन्दतां ततः । | महा. 3.214.16 | |
| | 3 तेजो माहेश्वर स्कन्नम् । | महा.9.43.6 | |
| | 4 स्कन्नत्वात् स्कन्दतां चापि । | महा.गी.प्रे.अनु. 85.82 | |
| | 5 स्कन्नत्वात् स्कन्दतां प्राप्तः । | तत्रैव 86.14 | |
| | 6 स्कन्दिता दानवगणास्तमात्स्कन्दः प्रतापवान् । | वा.पु.उ.11.42 | – – |
| **स्कान्दं (पुराणं)** | यत्र स्कन्दः स्वयं श्रोता वक्ता साक्षात् महेश्वरः । तत्तु स्कान्दं समाख्यातं.... | शि.पु 5.44.133 | – – |
| **स्थाणुः** | 1 दहत्यूर्ध्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत् । स्थितलिंगश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ।। | महा. 7.173.98 | |
| | 2 दहत्यूर्ध्वं स्थितो यच्च प्राणान् नृणां स्थिरश्च यत् । स्थिरलिंगश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ।। | महा.गी.प्रे. 161.10½ | |
| | 3 क्रोधेन महता युक्तो लिंगमुत्पाद्य चाक्षिपम् । उत्क्षिप्तं सरसो मध्ये ऊर्ध्वमेव यदा स्थितम् । तदा प्रभृति लोकेषु स्थाणुरित्येव विश्रुतम् ।। | वामन.पु. 49.33-34 | |
| | 4 यस्मादुक्तः स्थितोऽस्मीति तस्मात्स्थाणुरिति स्मृतः । | लि.पु.70.324 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 5 ततः प्रभृति देवेशो न प्रासूयत वै प्रजाः । ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् । यस्माच्चोक्तं स्थितोऽस्मीति ततः स्थाणुरिति स्मृतः ॥ | वा.पु.पू.10.59 | |
| | 6 शुभाशुभात्मिका या तु सैव सृष्टिः प्रशस्यते एवं स्थितः स तेनादौ सृष्टेः स्थाणुरतोऽभवत् ॥ | म.पु.4.32 | |
| स्पर्शः | स्पृशती स्पर्श उच्यते । | महा.12 240.4 | – – |
| स्मार्त्तः | स्मरणात्स्मार्त उच्यते । | वा.पु.पू.59.39; लि.पु.पू.10.16 | – – |
| स्मृतिः | 1 स्मरते यत्स्मृतिः सर्वम् यतः । | लि.पु.पू.8.72 | |
| | 2 वर्तमानव्यतीतानि तथैवानागतानपि । स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते ॥ | लि.पु.70.23; वा.पु.पू.4.36 | |
| स्रोतः | स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव । | महा. 12.312.5 | – – |
| स्वयम्भूः | 1 तत्र जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम् । | हरि.1.1.29 | |
| | 2 हिरण्यवर्णमभवत् तदण्डमुदकेशयम् । तस्मिन् जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम् ॥ | अ.पु.17.9 | |
| | 3 अनादित्वाच्च पूर्वत्वात् स्वयम्भूरिति संस्मृतः । | लि.पु.70.104 | |
| | 4 नोत्पादितत्वाच्च पूर्वत्वात् स्वयम्भूरिति चोच्यते । | वा पु पू.4.41 | |
| | 5 अनुत्पादाच्च पूर्वत्वात्स्वयम्भूरिति स स्मृतः । | वा.पु.पू.5.40 कु.पु पू.4 62; 5.1 | – – |
| स्वरः | आत्मा बुद्धया समेत्यर्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । मारुतस्तूरसि चरन् मन्त्रं जनयति स्वरम् ॥ | अ.पु.336.5 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| स्वरोचिः | स्वरोचिभिर्यतो भाति भास्वानिव स बालकः । ततः स्वरोचिरित्येवं नाम्ना ख्यातो बभूव सः ।। | मा.पु.63.7 | – – |
| स्वर्णोदका | 1 यस्मात्सुवर्णान्निःसृत्य नद्येषा सम्प्रवर्तते । स्वर्णोदकेति तामाह देवदेवस्त्रियम्बकः ।। | लि.पु.पू.1.43.46 | |
| | 2 स्वर्भानुं (सूर्यं) नुदते यस्मात्तस्मात् स्वर्भानुरुच्यते । | लि.पु.पू.61.32 | |
| | 3 स्यर्भासा नुदते यस्मात्ततः स्वर्भानुरुच्यते । | वा.पु.पू.53.65 | – – |
| स्वामी | सारात् सारतमः स्वामी । | ब्र.वै.प्र.ख.42.23 | – – |
| स्वारोचिषः | स्वरोचिषः सुतो यस्मात्तस्मात् स्वरोचिषोऽभवत् । | मा.पु.66.29 | |
| हंसी | हंसा आत्मवशा यस्य योगेन योगिनी ध्रुवम् । बालः परमयोगीन्द्रस्तेन हंसी प्रकीर्तितः ।। | ब्र.वै.ब्र.ख.22.11 | |
| हनुमान्✻ | 1 क्षिप्तमिन्द्रेण ते वज्रं क्रोधाविष्टेन धीमता । –……वामो हनुरभज्यत । ततो हि नामधेयन्ते हनुमानिति……। | वा रा.कि. 66.24.25 | 3 40 |
| | 2 ततो गिरौ पपातैष इन्द्रवज्राभिताडितः । यतमानस्य चैतस्य वामो हनुरभज्यत । | वा.रा.उत्तर 35.47 | |
| | 3 पतितस्य कपेरस्य हनुरेका शिलातले । किंचिद् भिन्ना दृढहनोर्हनुमानेष | वा.रा.युद्ध 28.15 | |
| | 4 मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति ।। | वा.रा.उत्तर 36.11 | – – |
| हयग्रीवः | 1 स्थापयित्वा ह्यशिर उदकपूर्णे महोदधौ । वेदानामालयश्चापि बभूवाश्वशिरास्ततः । | महा. 12.335.54 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 योऽप्यसौ ह्यविक्रान्तो हयग्रीवश्च नामतः । | हरि.1.54.7 | |
| | 3 वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः । प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्तेऽवितथेहिताय ।। | भा.पु.पू.5.18.6 | |
| | 4 तेनाहृता मधुभिदा श्रुतयो हयास्ये । | भा.पु.11.4.17 | |
| | 5 प्रतीतप्रलयापाय उत्थिताय च वेधसे । हत्वासुरं हयग्रीवं वेदान् प्रत्याहरद् हरिः ।। | भा.पु.8.24.57 | |
| हरः❀ | 1 विगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः । | महा.ग.द्रोण 202.137 | 3 41 |
| | 2 हरः संसारहरणात् । | कू.पु.पू.4.63; 5.2 | |
| हरव्यूहः | हरव्यूहः समाख्यातो हराया व्यूह उच्यते । | लि.पु.27.152 | – – |
| हरिः❀ | 1 इडोपहूतयोगेन हरे भागं क्रतुष्वहम् । वर्णश्च मे हरिश्रेष्ठस्तस्माद्धरिरहं स्मृतः ।। | महा. 12.330.3 | 3 42 |
| | 2 हरसि प्राणिनो देव ततो हरिरिति स्मृतः । | हरि.3.88.44½ | |
| | 3 ब्रह्माणमिन्द्रं च यमं रुद्रवरुणमेव च । निगृह्य हरसे यस्मात्तस्माद्धरिरिहोच्यसे ।। | म.पु.248.36 | |
| | 4 हर्य्यायां हरिभिर्देवैर्हरिरेवाभवद्धरिः । | कू.पु.पू.51.31 | |
| | 5 हरिः सर्वहरो यतः । | कू.पु.पू.4.61 | |
| | 6 तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः । हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ।। | भा.पु.8.1.30 | |
| | 7 स्मृत्या पातकसंहारी हरिरित्यमिधीयते । | लि.पु.पू.शि.1.1 | |
| | 8 रुद्ररूपेण संहर्त्ता विश्वानामपि नित्यशः । भक्तानां पालको यो हि हरिस्तेन प्रकीर्तितः ।। (हरिर्हरति पापानि हरिरित्यक्षरद्वयम्) | ब्र.वै.(श.क.) | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 9 ये वदन्ति नरा नित्यं हरिरित्यक्षरद्वयम् । सर्वपापविनिर्मुक्तो याति विष्णो परं पदम् ।। | पद्म.पु.उ.ख. 72.12 | |
| हरिभक्तः | हरौ करोति भक्ति च हरिभक्तः स च स्मृतः । | ब्र.वै.ग.ख.35.73 | |
| हली | 1 आकृष्य लाङ्गलाग्रेण मुसलेनाशु ताडितम् । बलं बलेन ददृशे········ । | वि.पु.5.33.30 | |
| | 2 हलं च बलभद्रस्य गगनादागतं महत् । | वि.पु.5.22.7 | |
| | 3 नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः । द्रक्ष्यन्ति मां कलौ तस्मिन् अवतीर्णं हलायुधम् ।। | वा.पु.पू.23.188 | |
| | 4 हली च हलधरः स्मृतः । | ब्र.वै.कृ.ख.13.82 | |
| हविष्मती (पूर्णिमा) | हविर्भिश्च हविष्मती । | महा. 3.208.6 | – – |
| हव्यवाहनः | वहनाद्धव्यवाहनः । | महा.2.28.22 | – – |
| हस्तिनापुरं | 1 य(हस्ती)इदं हास्तिनपुरं मापयामास । एतस्य हास्तिनपुरत्वम् । | महा. 1.90.36 | |
| | 2 सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह । तेनेदं निर्मितं पूर्वं पुरैव हस्तिनापुरम् ।। | (श.क.)हरि. 1.20.17 | – – |
| हस्ती | हस्ताद्धस्ती । | वा.पु.उ.8.227 | – – |
| हारितः | हरितो युवनाश्वस्य हारितस्तत्सुतोऽभवत् । | कू.पु.पू.20.27 | – – |
| हिरण्यं | यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते । | महा.5.112.1 | – – |
| हिरण्यकशिपुः | 1 तं दृष्ट्वा मुनयस्तस्य नामाकुर्वंस्तु तद्विधम् । हिरण्यकशिपुस्तस्मात् कर्मणा तेन विश्रुतः ।। | वा.पु.उ.6.60 | |
| | 2 तं दृष्ट्वा मुनयस्तस्य नामाकुर्वन्त तद्धितम् । हिरण्यकशिपुस्तस्मात् कर्मणानेन स स्मृतः ।। | अ.पु.कश्यपीय-प्रजासर्गः | – – |
| हिरण्यगर्भः | 1 हिरण्यगर्भो द्युतिमानेष यश्छन्दसि स्तुतः । ····स एवाहं विभुः स्मृतः ।। | महा. 12.330.31 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 2 हिरण्यमस्य गर्भोऽभूद्धिरण्यस्यापि गर्भजः। तस्माद्धिरण्यगर्भत्वं पुराणेऽस्मिन्निरुच्यते ।। | लि.पु.70.106, वा.पु.5.40 | |
| | 3 हिरण्यवर्णमभवत् तदण्डमुदके शयम्। .... .... .... ---- हिरण्यगर्भो भगवान् उषित्वा परिवत्सरम्। तदण्डमकरोत् द्वैधन्दिवं भुवमथापि च ।। | ब्र.पु.17.10 | |
| | 4 भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः। ब्रह्मादयस्तथा देवा---- ---- ---- .... .... नमो हिरण्यगर्भाय गर्भे यस्य पितामहः ।। | म.पु.275.12,13 | |
| | 5 हिरण्यगर्भ इति यद्धिरण्याण्डसमुद्भवः। | भा.पु.5.20.40 | – – |
| हिरण्यरेताः | 1 एतैः कर्मगुणैर्लोके नामाग्ने परिकीर्तितः। हिरण्यरेता इति वै ऋषिभिः विबुधैस्तथा ।। | महा.गी.प्रे.अनु. 85.78 | -- -- |
| | 2 मांसमस्थीनि रक्तानि मेदोमज्जत्वचस्तथा। रोमाणि चाक्षिकेशाद्याः सर्वे जाता हिरण्मयाः। हिरण्यरेता लोके(षु)ऽस्मिन् विख्यातः पावकस्तदा ।। | वामन पु. 57.10 | |
| (पाठभेदः) | 3 मांसमस्थीनि रुधिरं मेदो मज्जाऽथ तस्य हि। रोमाश्मश्र्वक्षिकेशाद्याः सर्वे जाता हिरण्मयाः। हिरण्यरेता लोकेषु तेन गीतश्च पावकः ।। | तत्रैव | |
| हृषीकेशः✻ | 1 हर्षात्सौख्यात्सुखैश्वर्यात् हृषीकेशत्वमश्नुते। | महा. 5.68.9 | 3 43 |
| | 2 बोधनात्तापनाच्चैव जगतो हर्षणं भवेत्। अग्निषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन । हृषीकेशोऽहमीशानो वरदो लोकभावनः ।। | महा. 12.330.2 | |

| 1 | 2 | 3 | 4 |
|---|---|---|---|
| | 3 जायमाने हृषीकेशे प्रहृष्टमभवज्जगत् । | हरि.2.15.20 | |
| | 4 हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान् । हृषीकेशस्ततो विष्णो ! ख्यातो देवेषु केशव ! | हरि.3.88.47 | |
| | 5 हृषीकाणीन्द्रियाण्याहु स्तत्त्वज्ञानविशारदाः । ईशिता च त्वमेतेषां हृषीकेशस्तथोच्यसे ।। | म.पु.248.45 | |
| | 6 हृषीकाणि नियम्याहं यतः प्रत्यक्षतां गतः । हृषीकेश इति ख्यातो नाम्ना तत्रैव संस्थितः ।। | (श.क.)वराह.पु. कुरुक्षेत्रहृषीकेश-महिमाध्यायः | |
| हेतुः | हेतुर्हितेः स्मृतो धातोर्यन्निहन्त्युदितं परैः । अथवार्थपरिप्राप्तेर्हिनोतेर्गतिकर्मणः । तथा निर्वचनं ब्रूयाद् वाक्यस्यावधारणात् ।। | वा.पु.पू.59.108 | – – |
| हेरम्बः | दीनार्थबाचकः हेश्च रम्बः पालकवाचकः। पालकं दीनलोकानां हेरम्बं प्रणमाम्यहम् ।। | ब्र.वै.ग.ख.44.89 | – – |

————

# परिशिष्टम्

## संक्षेपा : (Abbreviations)

अं — अंग्रेजी
अ — अध्याय
अ.ख्या — अत्रिख्यातिः—पं. मधुसूदन शर्मा
अथर्व — अथर्ववेदः–1. वैदिक यन्त्रालय, अजमेर 1976
2. श्रीराम शर्मा, सम्पादितः 1960
अ. नि. — अत्रिनिर्वचनम्–म.म. मथुराप्रसाद दीक्षित वा.सं. विश्व-विद्यालय 1961
अनु. — अनुशासन पर्व
अ. पु. — अग्निपुराणम्–वेदव्यास–1. जीवानन्द विद्यासागर, कलकत्ता
2. मनसुखरायमोर, कलकत्ता
अपे. — अपेण्डिक्स नम्बर
अभि.शा. — अभिज्ञानशाकुन्तलम्–कालिदास-प्रणीतम्
अमर. — अमरकोषः–निर्णयसागर प्रेस, बम्बई 1927
असी. — असीरिया
अ.सु. — अमरकोषः–सुधाव्याख्या–निर्णय सागर प्रेस 1944
अहि. — अहिर्बुध्न्य संहिता (पू. उ.)–एडियार पुस्तकालय, मद्रास 1916
आ.गृ. — आश्वलायन गृह्यसूत्रम्–गणपति शास्त्री, त्रिवेन्द्रम 1923
आप. — आपस्तम्ब गृह्यसूत्रम्
आप्टे — संस्कृत इंगलिश डिक्शनरी, मोतीलाल बनारसीदास 1964
आश्व — आश्वमेधिक पर्व (महाभारतम्)
इति.पु.अनु. — इतिहास पुराण अनुशीलन, रामशङ्कर भट्टाचार्य इण्डालाजिकल बुक हाउस, वाराणसी
उ. — उत्तरार्द्धम्
उ. सू. — उणादि सूत्रम्–सिद्धान्त कौमुदीस्थम्
उ. को. — उणादि कोषः–युधिष्ठिर मीमांसक : बहालगढ़, सोनीपत 1976
उ. ख. — उत्तर-खण्डः

| | |
|---|---|
| ऋक् | –ऋग्वेद संहिता–स्वाध्याय मण्डल, पारडी |
| ऋ ऋ | –ऋग्वेद के ऋषि–हरिशरण, दिल्ली 1955 |
| ए. ऐ. इ. | –एथनालाजी आफ ऐन्शेण्ट इण्डिया–डा. रामचन्द्र जैन |
| ए. को. | –एकाक्षरनाम कोषसंग्रहः, राजस्थान प्राच्य विद्या प्रतिष्ठानम्, जोधपुरम् |
| एटी. या | –एटीमालोजीज़ आफ यास्क—डा. सिद्धेश्वर शर्मा |
| ऐ. ब्रा. | –ऐतेरेय ब्राह्मण |
| ऐ. या इ. | –ऐन ऐप्रीशियेशन आफ यास्क एज. ऐन इटीमालोजिस्ट—<br>डा सु. कु. गुप्त (लेखः) |
| ऐ. से. | –ऐंग्लो सेक्शन |
| का. पु, | –कालिका पुराणम्–विश्वनारायण शास्त्री |
| का. सू. | –काशिका सूत्रवृत्तिः, जयादित्यः चौखम्भा, बनारस |
| कु. | –कुमारसम्भवम्-कालिदास प्रणीतम् |
| कू. पु. | –कूर्म पुराणम्–वेदव्यास–नीलमणि मुखोपाध्याय/<br>मनसुखरायमोर, कलकत्ता |
| कृ. खं. | –कृष्णखण्डः (ब्रह्मवैवर्त पुराणम्) |
| कौ. ब्रा. | –कौषीतकि ब्राह्मणम् |
| ग.उप.ब्रा. | –गर्गोपनिषद् ब्राह्मणम् |
| ग. ख. | –गणेशखण्डम् (ब्रह्मवैवर्तपुराणम्) |
| गी वि भा | –गीता विज्ञान भाष्यभूमिका-पं. मधुसूदन ओझा |
| गो. उप. | –गोपथ उपनिषद् |
| गो. ब्रा. | –गोपथ ब्राह्मणम्—1. जीवानन्द विद्यासागरः, कलिकाता 1981<br>2. इण्डालाजिकल बुक हाउस, वाराणसी 1976 |
| ग्री. | –ग्रीक भाषा |
| छा. उप. | –छान्दोग्य उपनिषद्—गीताप्रेस, गोरखपुर/आनन्दाश्रम, पूना |
| छः. शा. | –छन्दश्शाकुन्तलम्—डा. शिवसागर त्रिपाठी, जयपुरम् 1978 |
| जै. उप. | –जैमिनीय उपनिषद् |
| जै..उप.ब्रा | –जैमिनीय उपनिषद् ब्राह्मणम्, रामदेवः, लाहौर 1921 |
| त. सं | –तर्कसङ्ग्रहः—अन्नम्भट्टः |
| ता. ब्रा. | –ताण्ड्य ब्राह्मणम् |
| तु. | –तुलनीयम् |
| तै. ब्रा. | –तैत्तिरीय ब्राह्मणम्—आनन्दाश्रम प्रेस, पूना 1981 |
| तै. सं | –तैत्तिरीय संहिता—1. आनन्दाश्रम प्रेस, पूना<br>2. स्वाध्याय मण्डल, पारडी 1945 |
| द स स | –दयानन्द सरस्वती—सत्यार्थप्रकाशः |

दे. पु. —देवीपुराणम्
दे. भा. —श्रीमद्देवी भागवतम् पुराणम्—मनसुखरायमोर, कलकत्ता 1961
द्र. —द्रष्टव्यम्
धा. क. —धातुकल्पद्रुमः—श्रीमद् गुरुनाथ विद्यानिधि, कलकत्ता
नि. —निरुक्तम् —यास्क विरचितम्—वेंकटेश्वर प्रेस बम्बई
नि. दु. —निरुक्तम्, दुर्गवृत्ति-सहितम्
नि. मी. —निरुक्त-मीमांसा—पं. शिवनारायण शास्त्री, इण्डालाजिकल बुक हाउस
नृ. पु. —नृसिंह पुराणम
पं. ब्रा —पञ्चविंश ब्राह्मणम
प. च —पउम चरिअ
पा. —पाणिनीया अष्टाध्यायी
पा.का-भा. —पाणिनिकालीन भारतवर्ष—डा. वासुदेवशरण अग्रवाल
पा. टि. —पाद टिप्पणी
पा. शि. —पाणिनीया शिक्षा
पु. —पुराणम्
पु. इ. —पुराण इण्डेक्स—(भाग-1,2,3,) दीक्षितार, मद्रास
पु. र. —पुराण रहस्यम्—सुरजनदास स्वामी
पु वि. —पुराण विमर्श—बलदेव उपाध्याय, चौखम्भा 1965
पु.वे.सा.स —पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन
—डा. रामशंकर भट्टाचार्य, हिन्दी साहित्य सम्मेलन, प्रयाग 1965
पू. —पूर्वार्द्ध
प्र. उ. —प्रक्रियासर्वस्वे उणादिखण्डः—नारायण, मद्रास वि.वि. 1933
प्र. ख. —प्रकृतिखण्डः (ब्रह्मवैवर्त पुराणम्)
फा. —फारसी भाषा
फ्रा. —फ्रान्सीसी भाषा
बाल —बालकाण्डम्
बृ. —बृहद्देवता—आचार्य शौनक
बृ. उप. —बृहदारण्यक उपनिषद्
बो. गृ. —बोधायन गृह्यसूत्रम्
ब्र. ख. —ब्रह्मखण्डम् (ब्रह्मवैवर्त पुराणम्)
ब्र. वै. —ब्रह्मवैवर्तपुराणम्
ब्र. पु. —ब्रह्मपुराणम्—वेदव्यास—खेमराज श्रीकृष्णदास—बम्बई
ब्रा. को. —ब्राह्मणोद्धारकोशः—विश्वबन्धुः, होशियारपुर 1966

भा. पु. –भागवत पुराणम्
भू. पू. –भूतपूर्वः
म. पु. –मत्स्यपुराणम्–वेदव्यासः
मनु. –मनुस्मृति :
महा. –महाभारतम्–आलोचनात्मक संस्करणम्–पुणे
महा. ग. –महाभारतम्–गंगाप्रसाद, महाभारत कार्यालय, दिल्ली
महा. चि. –महाभारतम्–चित्रशाला प्रेस, पुणे
महा.गी.प्रे –महाभारतम्–गीताप्रेस, गोरखपुर
महा-हरि –(महाभारतम्) हरिवंश पुराणम्
मा. पु. –मार्कण्डेय पुराणम्–वेदव्यासः-मनसुखराय मोर, कलकत्ता
मे. वै. –मेघदूत की वैदिक पृष्ठभूमि और उसका सांस्कृतिक सन्देश
–डा. सुधीर कुमार गुप्त
मै.सं. –मैत्रायणी संहिता, भारत मुद्रणालयः, औंध 1998 वि.
मो. वि. –मोनियर विलियम्स–संस्कृत इंगलिश डिक्शनरी
यजुः –यजुर्वेदः, वैदिक यन्त्रालय, अजमेर
या. स्मृ –याज्ञवल्क्य स्मृतिः
रघु –रघुवंश महाकाव्यम्–कालिदास :
रा. क. –रामकथा–कामिल बुल्के, प्रयाग विश्वविद्यालय, प्रयाग
रा.लि.स्ट –रामायण–ए लिंग्विस्टिक स्टडी–डॉ. सत्यव्रत दिल्ली
रा.म.शा –रामायण एवं महाभारत का शाब्दिक विवेचन–डा. शिवसागर
त्रिपाठी, देवनागर प्रकाशन, जयपुर 198(
ल. कौ. –लघुकौमुदी–वरदराज, गीताप्रेस गोरखपुर
लि. पु. –लिङ्गपुराणम्–वेदव्यास, वेंकटेश्वर प्रेस, बम्बई
लै. –लैटिन भाषा
वा. –वाचस्पत्यम्–चौखम्भा, वाराणसी 1962
वाक्य/वा.प. –वाक्यपदीयम्–भर्तृहरि
वा. पु. –वायुपुराणम्–वेदव्यास
वा. रा. –वाल्मीकीय रामायणम् 1. पण्डित पुस्तकालय, काशी
2. गीताप्रेस, गोरखपुर
वा. सं. –वाजसनेयि संहिता
वि. –विक्रमोर्वशीयम्–कालिदासः
वि.ध. –विष्णुधर्मोत्तरपुराणम्
वि. पु. –विष्णुपुराणम्–वेदव्यास, गीताप्रेस गोरखपुर
वि. भा. –विष्णुपुराण का भारत–डा. सर्वानन्द पाठक, चौखम्भा 1967

वे.भा.द. –वेदभाष्यपद्धति को दयानन्द सरस्वती की देन–डा. सु. कु. गुप्त
वे. वा. –वेदवाणी
वै इ. –वैदिक इण्डेक्स—कीथ और मैक्डानल
वैखा. –वैखानस गृह्यसूत्रम्
वै. एटी. –वैदिक एटीमोलोजी—डा. फतहसिंह, संस्कृति सदन, कोटा
वै. द. –वैदिक दर्शन—डा. फतहसिंह
वै.वा.भा.चि.–वैदिक वाङ्मय का भाषा वैज्ञानिक चिन्तन–पं. शिवनारायण शास्त्री
श. क. –शब्द कल्पद्रुमः— राधाकान्तदेवः, चौखम्भा, बनारस 1961
श. ब्रा. –शतपथ ब्राह्मणम्—डा. बेबर, चौखम्भा 1964
शा. गृ. –शांखायन गृह्यसूत्रम्
शान्ति –शान्तिपर्व (महाभारतम्)
शि. पु. –शिवपुराणम्—वेदव्यासः, वेंकेटेश्वर प्रेस, बम्बई
श्री द्व. –श्रीमद्भगवद्गीताध्यायद्वयी–डा. शिवसागर त्रिपाठी
इण्डिया बुक हाउस, जयपुर 1977
श्वे उप. –श्वेताश्वतर उपनिषद्
ष. ब्रा. –षड्विंश ब्राह्मणम्
सं.को. –संस्कृत कोष–उद्भव और विकास
सं.व्या.इ. –संस्कृत व्याकरण शास्त्र का इतिहास, (भाग-1,2) युधिष्ठिर
मीमांसक 2001 वि.
सर्वद. –सर्वदर्शनसंग्रहः–माधवाचार्यः, चौखम्भा विद्याभवनम् 1964
सा. पु. -साम्ब पुराणम्
सा.वि.ब्रा.–सामविधान ब्राह्मणम्
सि. कौ. –सिद्धान्त कौमुदी–भट्टोजिदीक्षितः
स्क.पु. –स्कन्दमहापुराणम्–मनसुखरायमोर, कलकत्ता
स्पे. –स्पेनिश
हरि. –हरिवंश पुराणम्–चित्रशाला प्रेस, पुणे 1936
हि.वि. –हिन्दी विश्वकोष–नगेन्द्रनाथ बसु, कलकत्ता.

———